श्रीः

# योगि श्री नागलिङ्ग शिवाराध्य कृतौ

ब्रह्मपथे



शिवाद्वैत पर्यङ्किकाख्यव्याख्यासनाथे

सव्यभागे वेदपथे

# श्री शिवाद्वैत पथविथिः ।

१९३५।

[मूल्यम् रु १–०–०

तेनालि भारती मुद्राक्षरशालायां मुद्रितः ।

श्री

शिवाय गुरवे नमः

# श्री शिवाद्वैत पर्यंकिका।

## आरभ्यते।

मंगळन्दिशतु विघ्ननायको मंगळन्दिशतु शक्तिसायकः ।
मंगळन्दिशतुमे सदा शिवा मंगळन्दिशतुमे सदाशिवः ॥

यो विश्वप्रभवो यमेति निखिलम् येनेद मारक्षितम्
यस्मैच श्रुतयोनमोविदधते यस्मात्पर न्नेक्ष्यते ।
भूम्नायस्य परिभ्रमत्यनुकलम्ब्रह्माण्ड भाण्डावळि
र्यस्मिम् त्सर्वमपिप्रतिष्ठित मिद न्तस्मैनम श्शम्भवे ॥

दिशावळीविश्रुत नागलिंग
समाख्य माराध्यकुलाब्धि सोमम् ।
मतान्त राम्भोनिधि कुम्भयोनि
म्पितामहम् लोकगुरु म्प्रपद्ये ॥

गर्भे निवेश्य कलयन्प्रतिसंचरेषु
सम्श्लिष्य सर्गनिचये सुखय न्सुषुप्तौ ।
पुत्रम्पितेव परिरक्षति य स्सदामा
न्त म्वै मुमुक्षु रभवम् शरणंगतोऽस्मि ॥

यत्कृपाप्रसरणा त्पुरातना
लेभिरेहि गुरवोपि गौरवम् ।
भावये सतत मादिमंगुरु
न्दक्षिणाभिमुखमेव दैवतम् ॥ ५

परात्मना दक्षिणदिङ्मुखेन
यथानियुक्तोऽस्मितथालिखामि ।
ततः प्रबन्धावळिसंगतेन
गुणेन दोषेण न सम् सृजामि ॥ ६

स्वाज्ञान विस्मृततनु स्त्विह सम्सरामि
ब्रह्माहमेव हि भवन्निति बादरेर्या ।
मायाविमोहयति शाम्यतु सा नितान्त
न्तत्त्वाववोधपरमास्त्र निरस्तरूपा ॥ ७

सम्सारमोक्ष स्थितिबन्धहेतो
स्सर्वात्मनोऽश्रान्त मुपासितस्य ।
पत्युः पशूनाम्परमप्रसादा
न्मुच्येयमि त्य स्त्वचला मतिर्मे ॥ ८

त्रयोविम्श त्यून पंचसहस्र गणितेषु हि ।
कलिवर्षेषु वृत्तेषु वत्सरे धातृनामनि ॥ ९
मासिचैत्रे वळक्षेहि पक्षेच दशमीतिथौ ।
पुष्यर्क्ष इन्दुवारेच लग्ने कर्कट काह्वये ॥ १०

केतौ कन्यागतेचैव मन्दे कुम्भस्थितेपिच ।
सगुरौ वृश्चिके मीने रविराहु बुधै र्युते ॥ ११

वृषस्थे सति शुक्रेच भौमेन सहितेतथा ।
कृष्णवेणी सरित्प्रान्ते ताडिकोण्डाह्वये पुरे ॥ १२

मल्लिकार्जुनदेवस्य क्षेत्रेयोऽजनिविश्रुते ।
मोक्षधर्मैक निलयंन्यबन्धी द्धर्मसंग्रहम् ॥ १३

प्राचारी त्पत्रिकाम् शैवरहस्यार्थविबोधिनीम्
कृतानेककृति स्सोऽय च्चीर्णपाशुपतव्रतः १४

भारद्वाज़कुलोद्भूत उद्भटाराध्यवम्शजः ।
ज्वालाम्बिकाघोरनाध दाम्पत्य फलितोदयः ॥ १५

श्री मद्वीरेश्वराराध्य कल्याण गुरुसेवकः ।
श्री श्री निवासमखिराट्कृपाधिगत सत्कलः ॥ १६

त्रैलिंगो नागलिङ्गस्स्वकृतेर्ब्रह्मपथाकृतेः
वृत्तिं विदधाति शिवाद्वैतपर्यंकिकाभिधाम् ॥

निष्पक्षपातबुद्धीना न्तत्त्वस्फूर्त्यैकृतात्मनाम् ।
सविशेषशिवाद्वैत श्श्रीकंठेन प्रकाशितः ॥ १८

तत्र यत्सविशेषत्वम् शंकरेण विखण्डितम् ।
मण्डयामासतद्भूयो रामानुजयतिः परम् ॥ १९

तदीयम् शिवपारम्यम् रामानुज विदूषितम् ।
मण्डयामास तत्सर्वं श्रीमानप्पयदीक्षितः । २०

एव मावरणापाया च्छिवाद्वैत प्रभाकरः।
यथावज्ज्ञात्यपहर न्धीमतामान्तरन्तमः ॥ २१

प्रस्थानानि विमोक्षशास्त्रगहनेऽनेकानि वीक्ष्य भ्रमा
द्गन्तव्येऽध्वनिसम् शयाद्विचरताम् खिन्नात्मनान्धीमताम्।
सत्यम्ब्रह्मपथम् सुगोचरयितुन्निर्वर्तितेयंकृतिः ।
नैवोपक्रमिता बुधाननुमया वैदुष्य दर्पोद्धतेः ॥

गाढोपगूढ वितत स्वमताभिमान
च्छन्नेक्षणाः कृति मिमा न्नविलोकयेयुः ।
याथार्थ्य संग्रहणलोलुपताधुरीण
निष्पक्षपातधिषणा नकि माद्रियेरन् ॥ २३

मर्त्यालि दुर्विधिवशा द्भूत तत्वशास्त्रे
ष्युच्चावचाध्वनिचयम् रचयन्ति केचित् ।
सर्वार्थ दर्शनपरोऽखिलबुद्धिसाक्षी
त्र्यक्ष स्सदानयतुमा मृजुनापथैव ॥ २४

येलोका बहुभाष्य दर्शनवशाद्विक्षिप्तनैजान्तरा
येभूयःकिलपक्षपातविरहा न्न्यायैकबद्धादराः ।
श्रृङ्गग्राहिकया परम् श्रुतिगतन्तत्वं जिघृक्षन्तिये
तेषामेवकृते विभातुरचिता सङ्क्षिप्तभाषा कृतिः ॥ २५

श्री शिवायगुरवेनमः

# ब्रह्मपथ आरभ्यते ।

---

अव ॥ मंगळादीनीत्यभियुक्तोक्ति मनुरुध्य वस्तुनिर्देशरूपंमंगळ मादौ निबध्नन्नभिनवतया प्रतिपाद्यमानो ब्रह्मपथोनविदुषाम् विस्रम्भभाज नम्भवेदित्याशंका न्निराकरोति ॥ यथा.

सर्वानुग्रहतत्परेण जगतामीशेन सम् श्रावितो
वेदव्यासमुखै स्ततोमुनिवरै स्सम्यक्प्रतिष्ठापितः ।
धाराळश्रुति सूत्रसूक्तिमयसव्यासव्यभागोज्ज्वल
श्श्रीमान्ब्रह्मपथस्सदा विजयते श्रीकण्ठकण्ठोदितः ॥

सर्वेति ॥श्रु॥ ईशानस्सर्वविद्याना मितिश्रुत्या । अष्टादशानामेतासाम् विद्या नाम्भिन्न वर्त्मना । मादिकर्ताकविस्साक्षा च्छूलपाणि रिति श्रुति रित्यानुशासनिकवचनेन । शास्त्रयोनित्वा दितिसूत्रेणच सकलविद्याप्रथमोपदेष्टृतया प्रमितत्वेनादिगुरुत्वम् ॥

अतएव—भगवान्पतंजलिः । सू ॥ सपूर्वेषामपिगुरुः । कालेनाऽनवच्छेदादि तीश्वरस्यादिगुरुत्व मन्वममस्त ॥

ततश्च—ब्रह्ममीमाम्सारचयित्वासात्यवतेयेन । वृत्त्यादिनिर्मातृभिर्बोधायनाद्यैश्चमहर्षिप्रवरैः । परस्ताच्च सूत्रभाष्यादिकर्तृभिर्नीलकण्ठापरपर्याय श्रीकण्ठभगवत्पादैश्च प्रतिष्ठापिततयाऽस्य पथः परमप्राचीनत्वान्नाभिनवत्व शंकास्पदत्व मित्याकूतम् ॥

अव ॥ वस्तुनिर्देशरूपम्मंगळ मितोपिनिबध्नाति ॥ यथा ॥

मू ॥ आचार्यैः परिकर्मितम्बहुमतैः कैश्चित्परावर्तितम् ।
व्याख्यातं कतिभिश्चिदौपनिषदप्रामाण्यबद्धादरैः ।
कैश्चित्स्वार्थपरैस्तथा कलुषितम् संचोरितार्थम्परै
श्रुत्यन्तार्थनिकेतन म्विजयते श्रीकण्ठभाष्य म्परम् ॥

आचार्यैरिति॥ बहुमतैः श्रीहरदत्त भवदेव मल्लिकार्जुनपण्डित सोमनाथा राध्य प्रभृतिभिश्चतुर्वेदतात्पर्यसंग्रहादौ ॥ कैश्चित्— शंकरप्रभृतिभिः । परिवर्तितम्—निर्विशेषपरतया व्यत्यासितम् । कतिभिश्चित् अभिनवनीलकण्ठाचर्यादिभिः क्रियासारादिषु व्याख्यातम् ॥ कैश्चित् — पूर्णप्रज्ञादिभिः कलुषितम् ॥परैः — रामानुजादिभिः, संचोरितार्थम् — संगृहीतार्थम् ॥ परम्— सर्वेषामपि पुरातनम्- सारतरार्थंच । श्रीकण्ठभाष्यम् । विजयते — सर्वोत्कर्षेण वर्तते ॥

अव ॥ प्रबन्धृप्रबन्धाभिधानाभिधानमुखेन चिकीर्षित म्प्रतिजानीते॥यथा॥

मू ॥ परैर्ब्रह्मपथो मोक्षपथिकाऽगोचरीकृतः ।
सत्यावेदन कामेन नागलिंगेन भास्यते ॥

श्रीः

# ब्रह्मपथे

# ( सव्यभागो ) वेदपथ आरभ्यते ।

अव ।। मंगळमादौनिवध्नाति ।। मीमाम्सेति ।

मू ।। मीमांसाद्वय कल्पपादपनयच्छायापनीतश्रमः
कर्मज्ञानतुरंग भक्तिशकटारूढाध्वनीनव्रजः ।
आशुब्रह्मपुरम् नयन् परिहरम् स्तन्त्राटवीवर्त्मन ।
श्रीकण्ठ प्रतिबोधितो विजयते श्रीवेदमार्गस्सदा ।।

व्या ।। महर्षिकल्पितत्वेन पादबद्धत्वेनच मीमांसाद्वयस्य कल्पपादपरूप त्वमुचितम् । तस्यनयाएवच्छायास्ताभि रपनीतश्श्रमोऽध्वक्रमजन्यो विचारसम्भावितश्च यस्मिन्नित्यत्र नयानामपि परिश्रान्त्यपनोदकतया छायामयत्वमनुगतमेव ।।

भक्तिशकटेत्यनेन भक्तेरेव परमेश्वरसायुज्य रूप परममुक्ति मुख्य साधनत्वम् । कर्मज्ञानतुरङ्गेत्यनेन कर्मज्ञानयो स्तत्साधनत्वमभिमत मिति व्यंजितं ।। अतएव समुदितानाम् कर्मज्ञान भक्तीनामेव मोक्षसाधनत्वमभीप्सितमितिव्यञ्जितम् । अतएव ।। नाहम्वेदैर्न तपसान दानेन नचेज्यया । भक्त्यात्वनन्ययापार्थ ।। इति भगवता वासुदेवे नोक्तम् ।। तथा भगवताभाष्यकृतापि नवयम् धर्मब्रह्म विचाररूपयोश्शास्त्रयोरत्यन्त भेदवादिनः किन्त्वेकत्व वादिनः । धर्मब्रह्मणोराराधनाराध्य भूतयोः प्रतिपादकम् । अथा

तोधर्मजिज्ञासे त्यारभ्य – अनावृत्ति श्शब्दादि त्येतावत्पर्यन्त मेकमेव शास्त्रमित्यारभ्य - यावदुत्पद्यते ज्ञानन्तावदनुष्ठेयानि कर्माणीतिच प्रतिज्ञाय - इच्छाया अपुरुषार्थत्वादिति कर्मणाम् विविदिषासाधनत्वपक्षम् व्युदस्य विद्याञ्चाविद्याञ्चयस्तद्वेदो भयगुम्सह। तेनैति ब्रह्मवित्पुण्यकृच्च सत्येन लभ्यस्तपसाह्येष आत्मा सम्यक् ज्ञानेनब्रह्मचर्येणनित्य मित्यादिका ज्ञान कर्म समुच्चयवादिनी श्रुतिरुपलभ्यते। ततः कर्मज्ञानयो र्मोक्षैकफल त्वात्तद्विचारयोः क्रमनियमोयुक्त इत्यादिनाकृत्स्नस्य कर्मज्ञाना त्मकस्यवेदस्यैककण्ठयं प्रकाशितम्। यद्यपि भक्तेरेव ज्ञानरूप तया ज्ञानस्य भक्त्यङ्गत्वमुक्तम्विरुद्धन्तथापीह ज्ञानस्य परोक्ष स्यैवग्रहणादविरोधः ॥

अनेन - यत्परैः सन्यस्य श्रवणंकुर्यादितिज्ञानकाण्डस्य यतिमात्राधि कारिकत्वम् - गृहस्थानाङ्कर्मकाण्डमात्राधिकारिकत्वञ्च निगद्य पूर्वोत्तरमीमांसयोर्विभिन्नाधिकारिकत्वम् प्रतिज्ञाय। परमेश्वरस्य कल्पितत्वाभ्युपगमेन भक्तियोगस्या ऽमुक्तिसाधकत्वञ्चाभ्यु पेयते। तत् सर्वश्रुतिसामरस्यविधुरतया श्रुतिपथविपरीत मित्यावेदितम्। श्रीकण्ठसन्दर्शित इत्यनेन श्रीनीलकण्ठभगवत्पा दसन्दर्शित शिवाद्वैत भिन्नशुद्धाद्वैत विष्णुविशिष्टाद्वैतादीनाम् वेदपथव्यतिरिक्तत्वम् ध्वनितम् ॥

श्रीः

## वेदपथे

# शिवाद्वैत पथविधि रारभ्यते ।

---

अव । अथग्रन्थारम्भम् समर्थयति -

मू ॥ सर्वश्रुत्यन्त मुख्याशयसमधिगत श्रीशिवाद्वैतएव
प्राज्ञा बाभाति विश्वोत्तरपरमपद प्रापकोराजमार्गः ।
अप्येवम् हन्ततिप्योदितकुपथसुसंदिग्ध चित्ताध्वगालि
स्सम् वृत्त स्तद्यथावत्सुगमयितु मिहोद्भास्यते वाक्प्रदीप्त्या ।

व्या ॥ सर्वेति । यद्यपि सर्वश्रुति महातात्पर्य विषयः परमेश्वरसायुज्य
रूप परममुक्तिसाधनश्शिवाद्वैत एकएव राजमार्गतया चकास्ति ।
तथापि तस्य कलिकौटिल्यमूलबहुल कुमार्ग समाकुलित चित्ताना
म्मुमुक्षूणान्दुष्प्रवेशरूपतया सकलमुमुक्षु जनविस्रम्भ भाजनता-
मुपनेतु कामेनाऽयमग्रन्थ आरभ्यतइत्याकूतम् ॥

अव ॥ अभिमतश्शिवाद्वैतः किम्विध इत्याशङ्क्य निरूपयति ।

मू ॥ विस्फूर्जच्चिद चिन्मयाखिल जगद्रूपस्वशक्त्यायुतो
विश्वात्मा विमलो लसच्छुभगुणोऽधीष्टे शिवः केवलः ।
अत्रान्तर्गणिकम् विशेषमितरे कैवल्यम प्यन्ततो
मन्वाना विवदन्ति मुख्यमपरे देवेविशिष्टेश्रुम् ॥

व्या ॥ विस्फूर्जदिति ॥ चिदचिद्रूप सकलप्रपंचाकारपरशक्ति विशिष्ट शिवः केवल इति ॥ सएकएवाऽधीष्टे सकलञ्जगदीशत इत्यर्थः ॥

तथाचश्रु ॥ ॥ शिवएवकेवलः । एकएवरुद्रोनद्वितीयायतस्थे । इत्यादि श्रुतिभिरद्वितीयस्यशिवस्यैवकारणत्वाम्नानाच्छिवाद्वैतमेव श्रुतिसम्मतमिति विज्ञायते

ननु—शिवएवकेवलः । एकएवरुद्र इत्यादिना समस्त विशेषनिषेधा त्तन्निर्विशेष शिवाद्वैत मेवेतिचेन्न - केवल इत्यादिपदैस्सदसदादीन मेव प्रतिषेधेन निर्विशेषत्वाप्रतिपादनात् । अन्यथा । ॥ श्रु ॥ मायान्तु प्रकृतिम् विद्यान्मायिनन्तु महेश्वरमिति महेश्वरस्य चिदचिदाकारमाया शक्तिविशिष्टत्व माम्नातम् पीडयेत ।

नच—मायायाः सदस दनिर्वचनीयस्वभावतया कल्पितत्वेन तया वैशिष्ट्य न्निर्विशेषतामेव बोधयेदिति वाच्यम् श्रु । तस्यैवशक्ति र्विविधैव श्रूयते स्वाभाविकीज्ञानबलक्रियाच । इत्यादिना पारमेश्वर्यामायाशक्ते स्स्वभावसिद्धत्वाम्नानेन भवत्कल्पित कल्पितत्वसम्भावनाया अनुपादे यत्वात् ॥

ननु—ब्रह्मण स्सविशेषत्वपक्षस्य गौरवदोषदूषिततया निर्विशेषत्वमेव युक्तमितिचेन्न । तर्हि । ब्रह्मास्तित्वपक्षस्यापि शून्यवादापेक्षया गौरवत्वेन शून्यवादस्यैवाऽभ्यर्हितत्वापत्तेः । निर्विशेषत्वपक्षे ब्रह्मणोजगत्कारणत्वा निर्वाहेण निर्विशेषब्रह्माभ्युपगमस्य निरर्थकत्वाच्च ।

नच—जगतोमिथ्यात्वेन तत्कारणत्व मनपेक्षित मितिवाच्यम्। जगन्मिथ्यात्वस्य विज्ञानवाद्यभिमतत्वेन तस्याऽनुपादेयत्वात्।

ननु—ब्रह्मणः कूटस्थस्य जगदाकारेण परिणामे विकारित्व प्रसक्त्या अनित्यत्व मापद्येतेतिचेन्न। नामरूपविभागाऽनर्ह सूक्ष्मचिदचिच्छक्ति विशिष्टस्य परमेश्वरस्य कारणत्वम् - नामरूपविभागार्हस्थूलचिदचिच्छक्ति विशिष्टस्य कार्यत्वमितिवदतामस्माकन्तत्प्रसङ्गाभावात्। अन्यथा, यतो वाइमानिभूतानिजायन्ते - येनजातानिजीवन्ति - यत्प्रयन्त्यभिसम्विशन्ति। इत्यादिना श्रुतानाम्—जायन्ते – जीवन्ति–सम्विशन्ति इत्यादि वचनानाम् लाक्षणिकत्व प्रसङ्गेन सर्वश्रुतिविरोधो दुष्परिहरस्स्यात्।

किंच—परमेश्वरस्य सविशेषत्वा नभ्युगमे। श्रु। यस्यब्रह्मचक्षत्रंचोभेभवतओदनः। मृत्युर्यस्योपसेचनमित्यादिना, तस्मादुपसमृहर्तेमहाग्रासायवैनमः। यइमाविश्वाभुवनानिजुह्व दित्यादिनाच श्रुतम् मृत्यूपसेचन मिळित ब्रह्मक्षत्रोप लक्षितनिखिलचिदचित्प्रपंचकबळभोक्तृत्वम् विरुध्येत। एवम् स्वेतरमखिलम् चराचरचिदचित्प्रपंचम् स्वात्मनि समहृत्य यदावर्तते परमेश्वरः - तदा - सर्वमिदम् निरस्तचन्द्रसूर्यादिप्रकाशतया विध्वस्त रात्रिदिनादि कालविभाग मपगतनामरूपविशेषतया स्थूलदेवमनुष्यादि व्यवहारशून्य न्तमोमात्रम् वर्तते। सएकएव परमेश्वरो निरङ्कुश प्रकाशस्सर्वसाक्षी तदानीमपि परिशिष्यते। तथाहि श्रुतिः यदातमस्तन्नदिवान रात्रिर्नसन्नचासच्छिव एवकेवल इति-

अत्र नसन्नचास दितिसदसतोः पशुपाशयोर्नस्वरूपसत्ता निषिध्यते किन्तु नामरूपविभागार्हम् स्थूलत्वम्। ननु, नित्यप्रकाशेशिवे परब्रह्मणि

सत्यपिकथम् तमोमयंजगदितिचेन्न, स्वयम्प्रकाशस्य सर्वसाक्षिणश्शिवस्य काहानिः। नामरूपशून्यतयाग्रहणायोग्येषु विषयेषु विहतकरणशरीरशक्तीनाम् जीवानाम् प्रपंचग्रहणन्नास्ति। मलतिरोहित स्वज्ञानतया शिवस्य स्वप्रकाशरूपस्यापि पूर्वमिवदर्शनन्नास्ति तदासमस्तकार्यराहित्यात् तस्मान्निरस्त समस्तकार्यविशेषोपरमसुषुप्तिमयो महावस्था तम इत्युच्यते। तथाहि स्मृतिः। आसी दिदन्तमोभूतमप्रज्ञात मलक्षणमिति तथा,नामरूपविभागानर्ह सूक्ष्मचिदचित्प्रपञ्चविशिष्टतयाशिवःकेवलइत्युच्यते सपुनस्सर्गकाले स्वसङ्कल्पमात्रेण समवायिकारणनिरपेक्षमेवस्वस्मात् प्रथम शक्तिपरिस्फुरणपूर्वम् पूर्वतत्तन्नाम विशिष्टमेव सकलचिदचिदर्थजातम् सृजति प्रकाशयति। तथाऽभियुक्तसूक्तिः। चिदात्मैवहिदेवोऽन्तस्थित मिच्छावशाद् बहिः। योगीवनिरुपादान मर्थजातम् प्रकाशयेदिति।

ननु—मायान्तु प्रकृतिम् विद्या न्मायिनन्तु महेश्वरम्। तस्माद्विराडजायत। इत्यादिनामायापुरुषयोरुभयोरुपादानत्वम् श्रूयते। कथन्निरुपादानत्वमितिचेत् - सत्यम्, यथाघटनिष्पत्तौ कुलालस्य स्वशरीरपृथक्त्वेन मृत्पिंड उपादानन्दृश्यते। तथा - नपरमेश्वरात् पृथक्सिद्धम्मायाद्युपादानम्। मायादिरूपात्परमेश्वराज्जगदुत्पत्तेः। अतोनविरोधः। स्वरूपापृथगवस्थान सूक्ष्ममायापुरुषः परमेश्वरएव स्वय मुपादानमपीत्युच्यते।

तथाऽथर्वशिखायाम्। ध्यायीतेशानम् प्रध्यायितव्यम्। सर्वमिदम् ब्रह्मविष्णुरुद्रेन्द्रास्तेसम्प्रसूयन्ते। सर्वाणि चेन्द्रियाणि सहभूतैर्नकारणम् कारणानाम् धाताध्याताकारणन्तु ध्येयस्सर्वैश्वर्य सम्पन्न स्सर्वेश्वरश्शम्भु राकाशमध्ये इतिश्रूयते। ततस्सर्वभूतानाम् यत्रसम्हारस्ततए वैतेषाम्

मुत्पत्तिरिति । अनन्तानाम्तेषाम् यावत्समूहृति स्ताव त्तत्रैवाऽनन्तशक्तौ स्थितिरिति सर्वसमूहर्ता शिवएव ब्रह्मशब्दाभिधेयः ।

यदुक्तम् समूहारस्य हिम्सारूपत्वात्तन्मूल क्रोधाद्यनर्थगुणसम्बन्धो ब्रह्मणोभवेदिति तदविचारवाग्विलासः । क्रोधादिमूलस्य तमोगुणस्य प्राकृतधर्मत्वात् ॥ उमासहाय म्परमेश्वर म्प्रभुन्त्रिलोचन न्नीलकण्ठम्प्रशा न्तम् । ध्यात्वामुनिर्गच्छति भूतयोनिम् समस्तसाक्षि न्तमसः परस्तादि तिश्रुतिरेव भगवती प्रमाणम्परमेश्वरस्य तमसः परत्वे । इहपौराणिकीफणि तिरपि परमेश्वरस्य मोहादिनिवर्तक ज्ञानादीना न्नित्यसम्वन्धमाह । ज्ञानम् वैराग्यमैश्वर्य न्तपस्सत्यम् क्षमाधृतिः । स्रष्टृत्व मात्मसम्बोधो ह्या धिष्ठातृत्वमेवच अव्ययानिदशैतानि नित्यन्तिष्ठन्ति शङ्करइति । अशेष विषयामोघ शुद्धवुद्धि विजृम्भणः । आत्मशक्त्यमृतास्वादप्रमोदरसिको युवा । इत्यादिच ॥ असङ्कुचित विभवः परमेश्वरोहिसिसृक्षुः । श्रु ॥ सोकामयत वहुस्यामिति । वहु प्रपन्चभवनाय आत्मनो मायालक्षणा मिच्छारूपाम् शक्ति माश्रयति । सतपोऽतप्यतेति । तपस्स्वरूपिकया ज्ञानात्मिकया शक्त्या सकलजीवकर्मानुगुणतत्तच्छरीरसामग्री मालोच यति । आलोच्य सङ्कल्पित सकलकरण विदग्धया क्रयाशक्त्या । इद म्मू सर्वमसृजतेति । इच्छाशक्तिभित्तौ निखिलजगच्चित्र मुन्मीलयति । तत्सृष्ट्वा तदेवानु प्राविशदिति । सकल कार्यजातमनुप्रविश्य शक्तित्रय सम्बन्धेन त्रिगुण भिन्नमूर्ति त्रयादि प्रपञ्चरूपो भवति । तदिहसर्वशक्ते स्सर्वज्ञस्य शिवस्य महिमा केन विज्ञायते ।

ननु जगतो मिथ्यात्वमेवयुक्तम् अथतस्य ईश्वरकार्यतया सत्यत्वाभ्यु गमे परमेश्वरस्य निमित्तकारणत्वसिद्धावप्युपादानकारणत्वासिद्ध्या सृष्टिर्नोपपद्यत इतिचेन्मैवम्, परमेश्वरस्योभयकारणत्वाभ्युपगमेन सर्वोप पत्तिसिद्धेः ।

नच—निमित्तस्य कुलालादेरुपादान मृत्पिण्डादि भावादर्शनात् । उपादानस्य मृत्पिण्डादेर्निमित्तकुलालादि भावादर्शनाच्च, कथ मेकस्मिन्नि मित्तत्व मुपादानत्वञ्च जगत्कार्यम् प्रतीतिवाच्यम्, परमेश्वरे जगदुभय कारणत्वस्य श्रुतिसिद्धत्वात् ।

तथाहि, श्रु ॥ स्तब्धोस्युत त मादेश मप्राक्ष्यो येनाश्रुतम् श्रुतम् भवत्य मतम्मत मविज्ञातम् विज्ञात मितिश्रुत्या येनादेष्ट्रा निमित्तभूतेन विज्ञातेन चिदचिद्रूपम् सर्वम्जगद्विज्ञातम् भवतीत्यादेष्टृ विज्ञानेन सर्वविज्ञान प्रति ज्ञानात् । यथैकेनमृत्पिंडेन ज्ञातेन सर्वमिदम्मृण्मयम् विज्ञातम्स्यादिति तदुपपादक मृत्पिण्ड द्रष्टान्तानुरोधाच्च ब्रह्मणोनिमित्तमात्रत्वे तद्विज्ञानेन सकल प्रपंचविज्ञानम् नसम्भवति ।

तथाहि । कुलालेज्ञाते घटादिकार्यम् नज्ञायते । किन्तु । तदुपादान मृत्पिण्डज्ञानेन । अतोनिमित्तस्य ब्रह्मणउपादानत्वेतत्सम्भवतीति ब्रह्मैवो पादानमर्पाति ।

किञ्च ॥ श्रु ॥ यथोर्णनाभिस्सृजतेगृह्णतेच तदात्मानग्ग्स्वयमकुरुत । इति स्वस्यैवजगदाकारत्वेनकृतिरवगम्यते परमेश्वरस्य । अतस्सएवनिमित्त मुपादनञ्च ।

ननु—अज्ञानविकारास्पद हेयप्रपञ्चरूपेण प्रकृतिभावेन कथंवर्तते निरस्तदोषलवकळङ्को निस्सीममङ्गळगुण रत्नाकरो निरङ्कुशनित्यसिद्धवैभवः प्रपञ्चातीतः परमशिव इतिचेत्, उच्यते ।

नित्यशुद्धानन्दस्य निरतिशयमङ्गळस्वभावस्यापि निमित्तस्य शिवस्य प्रकृतित्वेन जगदाकारत्वम् युक्तमेव चिदचिदाकारेण परिणामात् ।

ननु—कारणरूपविकारोहि परिणामः । पूर्वरूपपरित्यागेन रूपान्तरापत्तिः परिणाम इतिकथम् परमेश्वरो ऽनर्थधर्मात्परिभूत इतिचेत्, सत्यम्, यथानिमित्तस्य प्रकृतित्वेपि नविकारादिस्पर्शः परिणाम स्सम्भवति । कोयमपूर्वः परिणामः कुतूहलिनोवयम् तच्छ्रवणे विविच्यतामितिचेच्छृणु विवेचयामः ।

श्रु॥ यदातमस्तन्नदिवा नरात्रिर्नसन्नचा सच्छिवएव केवलः । तदक्षरम् तत्सवितुर्वरेण्यम् प्रज्ञाचतस्मा त्प्रसृतापुराणीति । यस्मिन्काले विगत चन्द्रसूर्यादितेजस्कतया दिवारात्रिविभागशून्य न्नामरूपविभागराहित्येन स्थूलसूक्ष्म चेतनाचेतन सदसद्व्यवस्थारहितम् सर्वमिद न्तमोभूतम् वर्तते। तदाशिवएवाऽ द्वितीयः केवलः । स्वाविभागापन्नचिदचिच्छक्तिः स्वप्रकाशः परिशिष्टोऽभूत् । तदक्षर न्तदेव तदानीमपिक्षररहितम् परम्वस्तु । तत्सवितुर्वरेण्यम् तत्सवितुरादित्यस्य पूर्वन्तेजः प्रदत्वेनवरेण्य मन्तर्वर्ति तेजः । तदपितदेव । तस्मात्तादृशात् स्वविलीनस्वेतर निखिल चिदचित्प्रपंचा दद्वितीयात् पुराणी नित्यसिद्धा तत्कालतमोपनोदिनी महास्फुरत्तारूपा परमाप्रज्ञा ज्ञानशक्तिः प्रसृता - प्रावर्तत, ततस्सोकामयत। बहुस्यामिति नामरूपादिविभागरहितः सूक्ष्मचिदचिद्वस्तुशरीरकोपिकारणावस्थः

परमेश्वरः सम्विभक्त नामरूप चिदचिद्वस्तु शरीरको भवेयमिति संकल्प मकरोत्। ततश्च-इदम् सर्वमसृजत। यदिदम् किंच। स्वशरीरभूतम् सूक्ष्मम् स्वस्माद्विभज्य, चिदचिद्वस्तु तत्सृष्ट्वा। तदेवाऽनुप्राविशदिति स्वतोविभक्ते चिदचिद्वस्तुनि स्वयमात्मतया प्रविश्य सच्चत्यच्चाऽभवदिति, नानासदसत्प्रपंच रूपेण बहुधापरिणतोऽभवदिति पुरुषस्य बालत्व युवत्वादिवत् ब्रह्मणोजगज्छरीरः कारणत्वङ्कार्यत्वञ्च। मायान्तु प्रकृतिम् विद्यान्मायिनन्तु महेश्वरम्। तस्यावयवभूतेन व्याप्तम् सर्वमिदंजग दितिश्रवणात् मायाया स्सकल प्रकृतित्वम्, तद्विशिष्टत्वम् महेश्वरस्य। तदवयवभूतेन – अम्शभूतेन भोक्तृत्वदशायाम् पुरुषशब्दितेन सकलजगद्व्याप्ति श्चाऽवगम्यते। यथाकेवलाच्छरीरात् लोमनखाद्युत्पत्तिर्न सम्भवति आत्मनश्च। तथानकेवल म्मायायाजगदुत्पत्ति र्महेश्वराच्च। सकलचेतनाचेतन प्रकृतिः पुरुषोभिव्यक्तो भवति। तद्रूपा दीश्वरादव्यक्त चतुर्मुखाद्युत्पत्तरिति। ततस्समुचितम् चिदचिद्विशिष्टः परमेश्वरः कारणम् कार्यञ्च तत्तदवस्थाविशेषादिति।

अतएव, साक्षात्परमेश्वरएव भूतयोनि रित्युच्यते।श्रु। उमासहाय म्परमेश्वर म्प्रभुन्त्रिलोचन न्नीलकण्ठ म्प्रशान्तम्। ध्यात्वामुनिर्गच्छति भूतयोनिम् समस्तसाक्षि न्तमसः परस्तादिति। समस्तसाक्षिण–स्सर्वज्ञस्य–तमसःपरस्य विश्वोत्तीर्णस्य परमशक्त्युमासहितस्य परमेश्वरस्यैव भूतयोनित्वम् भूतप्रकृतित्वञ्ज्ञीयते।

ननु—विशेषणभूतयो श्चिदचितो र्ब्रह्माभिन्नत्वस्य श्रुतत्वेन विशेषणा सिद्ध्या विशिष्टत्व मसिद्ध मितिचेन्न। चिदचितो र्ब्रह्माभिन्नत्वस्याऽ श्रुत त्वात्।

नच—तत्वमसि, इत्यादिना चितः, सर्वम् खल्विदम्ब्रह्मेत्यादिनाऽ चितश्च ब्रह्माऽभिन्नत्वम् श्रूयत इतिवाच्यम्, तत्वमसीत्यनेन जीवस्य ब्रह्मा त्मकत्वप्रतिपादनेन ब्रह्माभिन्नत्वस्याऽ विवक्षितत्वात्। सर्वङ्खल्वित्यने नापि जगतः कारणात्मनाऽभेदस्य विवक्षितत्वेपिकार्यात्मना भेदस्यैव विव क्षितत्वेन तदभिन्नत्वस्याऽ प्रतिपादनात्। अन्यथा। श्रु। अस्मान्मा यी सृजतेविश्वमेतत्। तस्मिम् श्चान्यो माययासन्निरुद्ध। इत्यादिनाभेद प्रतिपादका श्श्रुतयोव्याकुप्येयुः।

ननु—जीवस्य ब्रह्मात्मकत्व मप्रमितमितिवाच्यम्। योविज्ञानेतिष्ठन् य आत्मनितिष्ठन्। ऐतदात्म्य मिदगुम्सर्वम्। स आत्मातत्व मसीत्य नेन जीवस्य परमेश्वरात्म त्वाम्नानात्।

नच—प्रकृतश्रुतिनिगदित न्तादात्म्य न्ताद्रूप्यनिबन्धन मेव ननुत दन्तर्यामित्वनिबन्धन ञ्जीवब्रह्मणोर्भेदप्रतिपादकश्रुत्यनुपलब्धे रिति वाच्यम्, द्वासुपर्णासयुजासखायौ। ज्ञाज्ञौद्वावजा वीशानीशौ। नित्यो नित्यानांचेतन श्चेतनाना मेको बहूनाम् योविदधातिकामा नित्यादिना जीवपरयोः, जीवानाम् परस्परंच भेदस्य बहुश्रुतिसिद्धत्वात्।

ननु—अनेन जीवेनात्मनाऽनुप्रविश्येत्यादिना ब्रह्मणएव जीवरूपेण शरीरप्रवेशश्रवणेन जीवपरभेदः काल्पनिकए वेतिचेन्न। जीवपरभेदस्य

कल्पितत्वे। ऋतम्पिबन्तौ सुकृतस्यलोके गुहाम्प्रविष्टौ परमेपरार्ध्ये। इत्यादिनाश्रूयमाणस्य ब्रह्मणो जीवसाहचर्यस्य बाधितत्वेन तदन्यथानुपपत्या जीवपरभेदस्यैव सर्वश्रुतिस्वरससिद्धत्वात्। आत्मनाऽनुप्रविश्येत्यनेनापि अन्वित्युपसर्ग सामर्थ्येन साहचर्य स्यैव स्फुटतरप्रतीतत्वेन जीवरूपेण प्रवेशस्य श्रुतिविरुद्धत्वस्फुटीकरणाच्च।

ननु—नित्योनित्यानां चेतन श्चेततनानामि त्यनेन जीवस्य नित्यत्व चेतनत्वादि ब्रह्मसमानधर्म श्रवणेन जीवपरयो रभेदएव सिध्यतीतिचे न्न. नित्यत्वचेतनत्वादिना तयो स्साम्ये प्यनादिमलसम्बन्धभावतदभावाभ्यां वैषम्यस्य सहजसिद्धत्वात्।

अतएव—ज्ञाज्ञौ द्वा वजावीशानीशा वित्यादिश्रुत्या ज्ञत्वाज्ञत्वस्वातन्त्र्यास्वातन्त्र्यादिवैषम्य माम्नायते।

ननु—कथ मेतयो श्शरीरसम्बन्धे समानेपि कस्यचि दज्ञत्वादिनाऽनर्थसम्बन्धः कस्यचि दनर्थाभावश्च कथमितिचेन्न - सुखदुःखयो रेकाश्रयत्वस्याऽप्रयोजकत्वात्। किन्तु, स्वातन्त्र्यास्वातन्त्र्ययोरेव प्रयोजकत्वाच्च। तथाहिश्रुतिः। समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचतिमुह्यमानः जुष्टम् यदा पश्य त्यन्य मीश मस्य महिमान मिति वीतशोक ॥इति॥ अस्यास्साम्प्रदायिकोऽर्थः। जीवोऽय मनादिना कर्मनिगडेन बद्ध स्तत्तत्फलभोगानुगुणमायामय बहुकळेबरप्रविष्टो दुर्वारतापससङ्घात मनुभव न्ननीशया पारवश्येन तद्व्यपोहितु मकुशलएव मुह्यमान श्शोचति। महामोहनिबन्धनशोकजलधिमग्नो वर्तते। स्वप्रेरकतया जुष्टम् सर्वानुग्राहक मीश मुमा

सहितम् यदाऽसौ पुन रस्य प्रसादेन, पश्यति - अपरोक्षेण जानाति । तदाऽस्य महिमानम् निरतिशय मपहृतशोकः प्राप्नोतीति । अतः स्वत न्त्रस्य शिवस्याऽनादिमुक्तस्य शरीरसम्बन्धेसमानेपि जीववत् न तद्गतदोषोप पत्तिरिति सर्व मनवद्यम् ॥

एवम् विशिष्टशिवाद्वैतस्यैव श्रुतिसिद्धत्वेपि विशिष्टे परमेश्वरे श्रुत मा न्तर्गणिक म्भेदमेव कतिचि द्विशिष्टस्य महेशितु राम्नात क्कैवल्यमात्र मन्येच मुख्य मभिमन्वाना यद्यपि भेद मभेदम्वा तत्त्वमिति विवदन्ति तथा पि सर्वश्रुतिमहातात्पर्यविषयतया विशिष्टशिवाद्वैतमे वौपनिषद न्तत्वमिति युक्तमि त्याकूतम् ॥

इह यद्यपि केचित्-निर्गुणस्यैव ब्रह्मण श्शिवशब्दितत्व मभ्युपेत्य केवला द्वैतमेव शिवाद्वैत म्मन्यन्ते, तथापि त न्नोपपद्यते । तादृशतत्वप्रतिपादक श्रुतिसूत्रभाष्यविरहात् ।

नच---केवलाद्वैतप्रतिपादकम् शांकरमेव भाष्यन्तत्र साधक मिति वाच्यम् । शङ्करभाष्येवा - तदभिमते केवलाद्वैतेवापरतत्वस्य नामरूपरहि ततयाऽभिमतत्वेन ब्रह्मण श्शिवसंज्ञकत्वस्याऽनुचिततया केवलाद्वैतस्य शिवाद्वैतपदव्यवहार्यत्वानुपपत्तेः । तस्मान्नीलकण्ठाचार्यापराभिधानश्रीकण्ठ योगिविरचितभाष्यसिद्धम् विशिष्टाद्वैतमेव शिवाद्वैतशब्दितमि त्यवधेयम् ।

एत त्सर्वम् श्रीकण्ठभाष्ये श्रीनीलकण्ठभगवत्पादै स्सम्यक्समर्थितम्इ ति नेह पुनः ।

ननु—श्रीमद्भि रप्पयदीक्षितै श्शिवाद्वैतनिर्णये—

सूक्ष्मदृष्ट्या भाष्यच्छायापरामर्शे शुद्धाद्वैतएव तेषा म्परमसिद्धान्त इति महता ग्रंथेन निर्णीय - शुद्धब्रह्मावाप्तिरूप महाफलश्रवणमात्रसन्तुष्ट स्तत्प्राप्त्यर्थ न्तन्निदिध्यासनसाक्षात्कारजननसमर्थचित्तैकाग्र्यरहितो मन्द स्तदुपयोगिनम् सगुणोपासनामार्ग मपहाय शुद्धब्रह्मविषयेषु श्रवणमनननिदिध्यासनेषु हठा त्प्रवृत्त स्तदुचितंचित्तैकाग्र्य मनधिगच्छ न्नुभयभ्रष्टो माभूदिति तदनुजिघृक्षया तं निर्गुणविषयप्रवृत्तेः प्रच्याव्य सगुणोपासना स्वेव स्थिरया भक्त्या प्रवर्तयितु माचार्यै र्वेदान्तानाम् सगुणे समन्वयः प्रदर्शितइति समर्थितमितिचे त्सत्यम्, तथापि, सप्रपञ्चब्रह्मप्रतिपादक श्रुति सूत्रा द्यशेषवाङ्मय महाप्रासाद निगरणप्रवृत्तानाम् तेषाम्, श्रीकण्ठभाष्यार्थलिंगनिगरणस्याऽदुश्शकतया तत्सर्वम् स्वमताभिमानमूलमेव। आचार्यै र्बहु ष्वधिकरणेषु शुद्धाद्वैतस्याऽनूद्य कण्ठरवेणैव निराकृतत्वेन वैदुष्यातिशयमूलस्य भाष्यच्छायापरामर्शसाधितस्य विपरीतार्थस्याऽनुपादेयत्वात्।

तथाच— आरम्भणाधिकरणे - ब्रह्मप्रपञ्चयो र्न वय मत्यन्तभेदवादिनो घटपटयोरिव तदनन्यत्वपरश्रुतिविरोधात्। नचाऽत्यन्ताभेदवादिनः नवा शुक्तिरजतयोरि वैकतरमिथ्यात्ववादिनः तत्स्वाभाविकगुणभेदपरश्रुति विरोधात्। किन्तु शरीरशरीरिणोरिव गुणगुणिनोरिवच विशिष्टाद्वैतवादिन इति। शुद्धाद्वैतन्तु ईक्षत्यधिकरणं शङ्कोत्तराभ्यान्निराकृतम्, यथाः ननु—सदेव सोम्येद मग्र आसीत्। एकमेवाऽद्वितीय मित्यादिना सद्रूपम् वस्तु निर्विशेषमेवाऽवधारणा दवगम्यते। कारणावस्थ मेत त्कथम्

सूक्ष्मप्रपञ्चविशिष्टमि त्युच्यते । इति शङ्काग्रन्थः । सदेवेत्यवधारणेन नविशेषनिषेधः । किन्तु , असत्कारणत्वनिषेधः । असद्वा इद मग्र आसीत् । ततोवै सदजायत । इतिश्रवणा दसत्कारणत्वस्य भ्रान्तिप्रसक्ति सत्वात् । किञ्च । सदेव सोम्येद मग्र आसीदि त्यत्र कथम् निर्विशेष त्वम्ब्रह्मणः । आसीदिति क्रियाविशेषः । अग्रइति कालविशेषः । एकमेवे त्यवधारण मधिष्ठात्रन्तरनिषेधपरम् । अद्वितीयमिति जगदुपादानत्व मुच्यते । अतएव सर्वज्ञ मनन्तशक्तिविशिष्टंच । कथम् सर्वज्ञत्वसर्वशक्ति त्वविशेष मन्तरेण जगदुभयकारणत्वम् ब्रह्मणो भवतीति परिहारग्रन्थः ।

एवम्—सद्ब्रह्मपदशक्तिपर्यालोचनयापि विशिष्टाद्वैत न्तत्रैवाऽधिकरणे समर्थितम् । प्रकृतिप्रत्ययात्मकस्य सत्पदस्य नैकवस्तुपरत्वम् युक्तम् । प्रकृत्या प्रत्ययेनच तस्य वस्तुद्वयप्रतिपादनपरत्वात् । तथा ऽभि युक्त सूक्तिः ।

शक्तिश्शिवश्च सच्छब्दप्रकृतिप्रत्ययोदितौ ।
तौ ब्रह्म सामरस्येन समस्तजगदात्मकौ ॥ इति ।

स्थूलसूक्ष्मचिदचित्प्रपंचरूपशक्तिविशिष्टः परमेश्वरएव कार्यकारण रूपः सत्पदविषयइति, अत्र ब्रह्मे त्येकवचनम् शक्तिशिवयोः प्रत्येकम् नशक्यता । किन्तु शक्तिविशिष्टमेवे त्यादिना ।

तथा, उभयलिङ्गाधिकरणे, निर्दोषकल्याणगुणविशिष्टम् सप्रपंचम् ब्रह्मणः स्वरूपम्, नतु निर्विशेषमिति व्यवस्थापितम्, एवम् नित्यनिर्मल गुणविग्रहविशिष्टम् शिवरूपमेव ब्रह्म मुक्तप्राप्यम् नतदुत्तीर्ण न्निर्विशेषम् मुक्तप्राप्यम् ब्रह्मास्तीति । उपस्थितेऽतस्तद्वचनादित्यधिकरणे निर्णीतम् ।

यथा, मुक्तप्राप्यम् ब्रह्म शिवादन्यत्। उत शिवएवेति समृशयः। तदर्थम्मुक्तिः निर्विशेषब्रह्मभावापत्तिः, उत सविशेषब्रह्मसादृश्यापत्ति रिति समृशयः।

अत्र पूर्वःपक्षः - नीरूप न्निर्विशेषंच ब्रह्मेति परश्शता श्श्रुतयः प्रति पादयन्ति। तद्भावापत्ति र्मुक्तिरितिच। ब्रह्मैव सन्ब्रह्माप्येति। सयोह वै तत्परमम् ब्रह्म वेद ब्रह्मैव भवतीति सावधारणा श्रुतिः प्रतिपादयति अतो रूपवान् सगुण श्शिवो नपरम्ब्रह्म। नापि तत्सादृश्यापत्तिः परम मुक्तिरिति॥ सिद्धान्तस्तु॥

उक्तरूप श्शिवएव परम्ब्रह्म तत्सादृश्यापत्तिरेवच परममुक्तिः। दहरपुंडरीकादिषु तदुपासनेन तस्मि न्नुपस्थिते=उपासकेनप्राप्तेसति - अ तः तत्प्राप्त्यनन्तरभाविस्वरूपाभिनिष्पत्तेरेव हेतोः। तस्य=जक्षणोदिवि हारस्य एषसंप्रसादोऽस्मा च्छरीरा त्समुत्थाय परम्ज्योति रुपसम्पद्य स्वे नरूपेणाऽभिनिष्पद्यते। सउत्तमः पुरुषः सतत्र पर्येति जक्षन् क्रीडन् रम माणः स्त्रीभिर्वायानैर्वा ज्ञातिभिर्वा इत्यादिश्रुता वुक्तत्वात्। निरञ्जनः परमम् साम्य मुपैतीति श्रुतौ निरञ्जनस्य ब्रह्मसाम्यापत्तिप्रतिपादनाच्च। नहि परममुक्ते रन्यत्र स्वरूपाभिनिष्पत्तिः। अञ्जनाख्यमलापगमोवाऽ स्ति। रूपगुणनिषेधश्रुतयः शिवे परब्रह्मणि रूपगुणवत्येव हेयरूपगुणनिषे धपराः। ब्रह्मैवसन् ब्रह्मप्येति। ब्रह्मविं द्ब्रह्मैवभवतीतिच श्रुत्यो रेवकार स्साम्यश्रुत्यनुसारा दिवार्थः। अन्धोभवत्यपि रोदितीव। विनाशमेवाऽपी तो भवतीति सुषुप्तविषयश्रुता वेवकारस्येवार्थत्वदर्शनात्। अथवा ज्ञान विकासेन बृहत्वशाल्येव भवतीति तयो श्श्रुत्यो रर्थइति। एवम् सगुणम्

सविग्रहम् सप्रपञ्चम् सविशेषमेव ब्रह्म - नतु निर्विशेषमिति स्वयम्बहुषु प्रदेशेषु व्यवस्थापनेन तदर्थम् सूत्रारूढतया अनेकाधिकरणप्रवर्तनेनच विशिष्टाद्वैतमेव प्रयत्नेन परमसिद्धान्तम् व्यवस्थापितवताम् श्रीकण्ठाचार्यणाम्मते शुद्धाद्वैतंपरमसिद्धान्तइति कल्पनस्याऽवकाशाभावाच्च ।

तथा, अम्शाधिकरणे, आभासएवच ॥ इतिसूत्रभाष्ये, सत्यमिथ्योपाधिभ्या म्बद्धस्य ब्रह्मणएव जीवभावइति पक्षद्वयेपि युक्तय आभासाएवेति ॥ एवम् युक्त्याभासभासुरतया स्वेन निर्णीते शुद्धाद्वैतएव तस्य परमतात्पर्यमिति वादस्य हासावहत्वाच्च ॥

ननु—यदिभाष्यकाराणाम् विशिष्टाद्वैते जीवब्रह्मभेदेच दृष्टि रित्युच्येत तदा सन् घटः, सन् पटइति सर्ववस्तु ष्वनुस्यूततयासद्रूपस्य ब्रह्मणः सर्वोपादानत्वम् नसिध्यति । मृदुपरक्तम् घटादिकम्मृदुपादानमिष्यते । इतिजन्माधिकरणे - मृदयम् घटइत्यत्र यथामृद्व्याप्ति र्घटेदृश्यते तथा ब्रह्मेदञ्जगदिति ब्रह्मव्याप्ति र्नदृश्यत इतिचेत् । सन्घटः सन् पटइति सर्वत्र दृश्यतएव सद्रूपस्य ब्रह्मणो व्याप्तिरित्यादिना आरम्भणाधिकरणेच,सन्घट इत्यादिप्रत्यक्षस्य सद्रूपब्रह्मविषयत्वम् यदुक्त न्त न्नघटते । इदम्हि वचन मनुवर्तमाने सद्रूपे ब्रह्मणि व्यावर्तमानम् घटपटादिकम् कल्पितम् रज्जिवदमंशइव सर्पादिकमिति प्रपञ्चमिथ्यात्वयुक्ते रवकाशप्रदानार्थमे वेतिचेत् ।

न, अस्यवचनस्यब्रह्मणउपादानत्वोपपादनार्थत्वात्, कण्ठत स्तथैवोक्तत्वात् । तदव्यक्तमाहहीतिसूत्रे सन्घटइत्यादिना प्रत्यक्षसिद्धायां सत्तायां ब्रह्मत्वस्य निराकरिष्यमाणत्वेन परोदाहृतवचनानाम् प्रक्षिप्तत्वावगमाच्च।

नच—शास्त्रदृष्ट्यातूपदेशो वामदेववदित्यादिसूत्रे षूपासकस्य शिवाऽभेदभावना मुक्तिहेतुरिति प्रतिष्ठापनेन जीवब्रह्मणो रभेद आचार्याणाम् तात्पर्य मुन्नीयतइति वाच्यम्, तस्य आरोपिताभेदभावनापरत्वात् । अत एवप्रकाशादिवच्चाऽवैशेष्यम्, प्रकाशश्च कर्मण्यभ्यासात् । इति प्रकृतैतावत्त्वाधिकरणसूत्रभाष्ये । दिव्यम् ददामि तेचक्षुः पश्यमे योगमैश्वरमित्यादिषुच श्रीकृष्णादीना न्तदैक्यभावनया तदैश्वर्यप्रकाशन न्दृश्यते । ब्रह्मभावाभ्यासेन विश्वामित्रागस्त्यादीनाम् स्वर्गान्तरकरणजलधिकवळनादिसामर्थ्यम्, लोकेच मन्त्रिणाम् गरुडभावनया गरुडासाधारणधर्मप्राप्तिरित्यारोपितविषयत्व माविष्कृतम् । अतएव श्रीसुदर्शनाचार्यैरपि तात्पर्य संग्रहे ॥

श्लो ॥ ब्रह्मोच्यते परमसौ परमञ्च तत्वम् ।
ज्योतिः परञ्च परमेश्वर पद्मनाभः ।
त्वद्भावनैकरसिक स्त्वदनन्यभावा ।
न्मन्त्रीयथा गरुडभावनया गरुत्मानिति ॥

श्लो ॥ अद्वैत मागमशिरोभि रुपासनाया मुक्तम् ।
तदेव परमार्थतया नवाच्यमितिच स्पष्ट मुक्तम् ।

तदनुवर्तिनाम् श्रीकण्ठाचार्याणामपि मतस्य तादृशत्वेन शिवाभेदभावनाया मुक्तिहेतुत्वप्रतिष्ठापनमात्रेण जीवब्रह्मणो रभेदे परमतात्पर्यमिति निर्णेतु मयुक्तत्वाच्च ॥

ननु—अनियमाधिकरणादिसूत्रभाष्येषु, निरन्वयोपासकाना मत्रैव मुक्तिरिति निर्गुणनिष्ठाना मर्चिरादिगत्यनपेक्षायाः कथनेन शुद्धाद्वैते तेषाम् परमतात्पर्यमिति निर्णीयतइतिचेन्न। तत्रतत्र केचिदाहुरि त्युपक्रमेण तद्वचनस्य मतान्तरोपन्यासपरताया स्स्पष्टत्वात् ॥

नच—तस्य मतान्तरोपन्यासपरत्वे बहु ष्वधिकरणेषु निरूपणाऽसम्भवेनतत् स्वमतत्वेनैवाऽवगम्यतइति वाच्यम् – सर्वत्रापि तस्य केचिदितिमतान्तरोपन्यास परत्वेनैव स्वमतत्वभ्रमनिराकरणेन प्रस्तावशात्तस्याऽभ्यासमात्रेण स्वमतत्वेन ग्रहणाऽयोगात्। तस्मा द्भाष्यकृताम् शक्तिविशिष्टाद्वैतएव परमतात्पर्यमिति भाष्यपर्यालोचनयाऽतिस्फुट मवगम्य मानत्वेन तेषाम् शुद्धाद्वैते तात्पर्यकल्पन मनुचितमि त्यनवद्यम् ॥

ननु – यदि – श्रीकण्ठाचार्याणाम् शक्तिविशिष्टाद्वैतएव परमतात्पर्यन्तर्हि विद्वत्सार्वभौमै र्दीक्षितवरैः किमिति शिवाद्वैतनिर्णयइति पृथक् महता ग्रंथेन तेषाम् शुद्धाद्वैतएव परमतात्पर्यमिति निर्णयः कृत इतिचेत् ॥

उच्यते॥ स्वपरमसिद्धान्तार्थकोशस्य शाङ्करभाष्यस्य पठनेन शुद्धाद्वैतवादविस्रम्भे सिद्धेपि तावन्मात्रेण परमेश्वरोपासना मन्तरेण परमुक्ते रनुपलब्ध्या वेदान्ताना मुपासनाविधिपरत्वस्य शाङ्करभाष्ये निराकृतत्वेन – उपासनाविश्वास मन्तरा तदाचरणस्याऽसम्भावितत्वेन, श्रीकण्ठभाष्यपठनमन्तरेण परमेश्वरोपासनाविश्वासानुत्पत्त्याच श्रीकण्ठभाष्यपठनस्याऽवर्जनीयतया, श्रीकण्ठभाष्यस्य स्वसिद्धान्तप्रत्यनीकत्वनि-

राकरणमन्तरेण तत्पठनस्याऽसम्भावितत्वेनच, भेषजमनश्नताम् रुग्णानाम्बालाना मौषधे गुडमयत्वप्रख्यापनमिव शुद्धाद्वैतव्यतिरिक्तत्वबुध्याश्रीकण्ठभाष्यमपश्यता न्दुरन्तसंसारव्याधिमता ञ्जनानाम् प्ररोचनार्थम् शुद्धाद्वैतप्रतिपादकत्वप्रख्यापनमिति विज्ञायते ॥

ननु–विशिष्टाद्वैतमेव भवतु शिवाद्वैतशब्दितम् विशिष्टन्तुतत्वम् शिवाभिधेयमेवे त्यत्र किम्मान मितिचे दुच्यते ।

## —❁ शिवतत्वनिरूपणम्. ❁—

श्रूयतेहि । अह मेकः प्रथम मासम् वर्तामिच भविष्यामिच । नाऽन्यः कश्चि न्मत्तो व्यतिरिक्तइति ॥ एकोहि रुद्रो नद्वितीयायतस्थे । यो देवाना म्प्रथमश्चोद्भवश्च । विश्वाधिको रुद्रो महर्षिः । मायान्तु प्रकृतिम् विद्या न्मायिनन्तु महेश्वरम् । त मीश्वराणां परम म्महेश्वरम् ॥ भूयस्सृष्ट्वा पतय स्तथेशो विश्वाधिपत्य ङ्कुरुते महात्मा । ध्यायीतेशानम् । सर्वैश्वर्यसम्पन्न स्सर्वेश्वर श्शम्भु राकाशमध्ये । शिवएको ध्येय श्शिवङ्कर स्सर्वमन्य त्परित्यज्य । इत्येवमादिभि र्वचननिचयै र्निखिलजगज्जन्मादिकारण मनितरसाधारणशिवेशा नेश्वर महेश्वर शब्दवाच्यम् । सर्वान्तर्यामि ब्रह्मविष्ण्वादिसुरनिकरै रन्यैश्च सर्वैरुपास्य म्परंब्रह्म शिवएवेति सिद्धम् ॥ सदेव सोम्येद मग्र आसीत् । ब्रह्महवा इद मेकएवाऽग्रआसी

त्। इत्यादिवाक्येषु श्रुतानाम् सदादिसामान्य पदाना मग्नीषोमीय म्पशु मालभेतेति विधिवाक्यघटितस्य गवादिसाधारणस्य पशुशब्दस्य, छाग स्यवपायामेदसइति मन्त्रसम्प्रतिपन्न छागरूप पशुविशेषइव छागोवा मन्त्र वर्णादिति न्यायेन शिवएव पर्यवसानात्॥

ननु—हिरण्यगर्भ स्समवर्तताऽग्रे - एकोहवै नारायण आसीदित्या दिना क्वचि द्ब्रह्मविष्ण्वोरपि जगज्जन्मादिकारणत्वम् श्रूयत इतिचेत्।

उच्यते—नारायणा द्ब्रह्माजायते - रुद्रो जायत इत्यादिना नाराय णादेः द्विमूर्तिकारणत्वबोधकवचनजातस्याऽवान्तरकल्पवृत्तान्तप्रतिपादक त्वेन ब्रह्मविष्णुरुद्रेन्द्रा स्सम्प्रसूयन्त इत्यादिना शिवस्य त्रिमूर्तिकारणत्व बोधकवचनजातस्याऽदिसर्गवृत्तान्तबोधकत्वावश्यम्भावेनच निखिलजगज्ज न्मादिकारणत्वस्य शिवैकविषयत्वावगमात्॥

एव म्महाभारतेपि। यम् विष्णु रिन्द्र श्शम्भुश्च ब्रह्मा लोक पितामहः स्तुवन्ति विविधैस्तोत्रै र्देवदेव म्महेश्वरम्। तमर्चयन्ति ये शश्व द्दुर्गा ण्यतितरन्तिते इत्यादि राजधर्मीय दुर्गातितरणाध्याय वाक्य सन्दर्भेण। सोऽसृज द्दक्षिणा दङ्गा द्ब्रह्माणम् लोकसम्भवम्। वामपार्श्वा त्तथाविष्णुम् लोकरक्षार्थ मीश्वरः। युगान्तेचैव सम्प्राप्ते रुद्र म्प्रभुरथाऽ सृजदि त्यानुशासनिकीयोपमन्यूपाख्यानसन्दर्भेणच। ईश्वर श्चेतनः कर्ता पुरुषः कारणम्शिवः। विष्णु र्ब्रह्मातथासूर्यो देवताश्चैव सान्वयाः। सृजते ग्रसतेचैव तमोभूत मिदम् यदा। अप्रज्ञात मिदम् सर्वम् तदा ह्येको महेश्वर इति वसुहोममान्धातृसम्वादगतवचनसन्दर्भेणच शिवस्य

मूर्तित्रयकारणत्वद्वारा तुरीयत्वम् प्रतिपादितम् सङ्गच्छते , तत एवच । श्रु ।। शिवमद्वैत ञ्चतुर्थं म्मन्यन्ते सआत्मा सविज्ञेय इत्यादि श्रुतिजातम् सुसङ्गत म्भवति । ततश्च । श्रु ।। ऋतगूम् सत्य म्परम्ब्रह्मेति विरूपाक्षस्य परब्रह्मत्व मुक्तम् सङ्गत म्भवति ।।

केचित्तु – गुणमूर्तिभ्यः परम् तत्वान्तरम् नेच्छन्ति । अन्येच तादृशस्य शरीरम् नाभ्युपयन्ति । तदुभयमपिमत मवैदिकम् तथाहि, ब्रह्मोपनिषदि जागरिते ब्रह्मा । स्वप्ने विष्णु स्सुषुप्ते रुद्र स्तुरीय मक्षर मादित्यो विष्णु श्चेश्वरश्चेति । तापनी योपनिषदि । अकार म्ब्रह्माणम् नाभौ । उकारम् विष्णुम् हृदये मकारम् रुद्रम् भ्रूमध्ये । ओङ्कारम् सर्वेश्वरम् द्वादशान्तेइति । मैत्रेयोपनिषदि । तमोवा इदमेक मास , तत्परेणेरितम् विषमत्वम् प्रयातीत्यारभ्य - गुणनिरूपणानन्तरम् - तस्य प्रोक्ता अग्र्या स्तनवो ब्रह्मा रुद्रो विष्णुरिति । माण्डूक्योपनिषदि । शिव मद्वैत ञ्चतुर्थं म्मन्यन्ते इत्यादि श्रुतिभि स्तुरीय तत्वसत्वावगमात् ।

किञ्च । अक्षरत्रय मेतत्तु कारणत्रय मिष्यते । त्रयाणा ङ्कारण म्ब्रह्म भारूपम् सर्वकारणमिति योगयाज्ञवल्क्यवचनेन तुरीयतत्वावधारणाच्च । तस्यच ।। श्रु ।। ऋतगुं सत्य म्परंब्रह्म पुरुषम् कृष्णपिङ्गळम् । उमास हाय म्परमेश्वर म्प्रभुम् त्रिलोचनम् नीलकण्ठ म्प्रशान्तमित्यादिश्रुतिभि रुमासहायत्वादिविशिष्टविग्रहवत्त्वप्रतिपादना द्विग्रहसिद्धिः । तस्य शिवा दिशब्दाभिधेयत्व मथर्वशिखादिनिर्वचना त्प्रयोगप्राचुर्याच्चाऽवसीयते । तस्यैव पारम्यम्श्रुतिषु शिवपुराणेषुच प्रतिपाद्यते ।

नचोदाहृतोपनिषत्सु शिवपुराणेषुच गुणिरुद्रएव प्रतिपाद्यतइति शङ्क्यम् । नेषुसर्वत्र शिवविभूतिषु ब्रह्मनारायणयोरिव गुणिरुद्रस्यापि पाठात् ।

नच—विभूतिषु रुद्रशब्दो गुणिरुद्रामृशभूतरुद्रपरइति वाच्यम् । ब्रह्मादिशब्दसाहचर्येण उदाहृतरुद्रशब्दस्य रुद्रामृशपरत्वानवगमात् । यत्रा ये श्रूयते यच्चतत्ताद् गवगम्यतइतिन्यायात् । एवम् तुरीय शिवएव भवति कारणञ्जगतः ॥ श्रु ॥ शिवएवकेवल इत्यादिश्रुतिवचनेभ्यः, अत एव, श्रु ॥ कारणन्तु ध्येयः । शिव एकोध्येय शिवङ्कर स्सर्वमन्यत्परिस्यज्ये तीतरपरिस्यागपूर्वकम् शिवोपासनाविधायकवचनैः वैष्णवपथप्रतिषेधे प्रतिपादयिष्यमाणेन सर्वविद्योपास्यत्वेनचशिवएवोपास्य इतिचाऽवगम्यते ॥

अतएव—श्रु॥ अन्त रिच्छन्ति तमूजने रुद्रम्परोमनीषया । गृभ्गन्ति जिह्वया ससम् नित्य न्त्रिसन्ध्यम् शिवलिङ्ग मभ्यर्च्यमि त्यादिनिगमोक्तिभि शिवाराधनम् विधीयते ।

नच—तै र्वचनै शिवाराधनस्य नित्यत्वम् नावगम्यतइति शंक्यम् । अन्तरिच्छन्तीति मन्त्रस्य शिवपूजाऽकरणपूर्वकभोजननिन्दातात्पर्यकत्वेन निन्दोन्नीतनिषेधविधिना तस्य नित्यत्वावगमात् । तथैवोपक्रमृहित म्परा शरेण । अन्तरिच्छन्ति ये रुद्रम् सदावन्द्य म्मनीषया । गृभ्णन्तिजिह्वया तेहि रसपूर्णामृतोदकम् । अन्त र्नेच्छन्ति ये रुद्रम् साम्बम् समृसारभेषजम् । पुरीषमेव गृह्णन्ति जिह्वया ने नसमृशय । इति ॥

अतएव— योगयाज्ञवल्क्येन। त्रिमूर्तिध्यान मुक्त्वा । आकाशे वायु मारोप्य हकारेण समन्वितम् । उमार्थदेहम् वरदम् सर्वकारणकारणम् । शिवम् सञ्चिन्तयन्यस्तु मुहूर्तमपि धारयेत् । सएव मुक्त इत्युक्त स्तान्त्रिकेष्वपि शिक्षितैरितिशिवध्यानस्य मोक्षहेतुत्व मुक्तम् ॥

किञ्च । श्रु ॥ तव श्रिये मरुतो मर्जयन्त । रुद्रयत्ते जनिम चारुचित्रम् । पदम् य द्विष्णो रुपमम् निधायि । तेन पासि गुह्यम् नामगोनामिति ऋक्समहिता मन्त्रेणापि देवैर प्याचरितत्वेन शिवलिङ्गाराधनमवश्यकर्तव्यमि त्यवगम्यते ॥

तथाहि, हेरुद्र । मरुतो देवाः । चारुचित्रं मनोज्ञ माश्चर्यभूतञ्च यत्ते जनिम । तव श्रिये - त्वत्सम्बन्धिसम्पत्प्राप्त्यै शिवत्वप्राप्त्यै - अणिमाद्यष्टैश्वर्यप्राप्त्यैवा मर्जयन्त - पूजयन्ति । यत् - यस्मात् । उपमम् उपसमीपेमा - लक्ष्मीः यस्य तादृश म्पदम्विष्णो र्नारायणस्य । त्वया निधायि - निहितम् । तेनहेतुनेति पूर्वेणाऽन्वयः । गोनाम् वाचाम् गुह्य म्नाम प्रणवरूपम् पासि - रक्षसि - वाचकत्वेन पालयसी त्यर्थः ॥ ब्रह्मण स्सृष्टिकर्तृत्वम् विष्णो र्दानवमर्दनम् । स्वर्गाधिपत्य मिन्द्रस्य शिवपूजाविधेः फलमिति पुराणवचनात् । रौद्रम्लिङ्ग म्महाविष्णु र्भक्त्या शुद्धम् शिलामयम् । चारु चित्रम् समभ्यर्च्य लब्धवा न्परमम् पदमिति वचनाच्च । विष्णो रक्षितृत्वस्य शिवाराधनफलत्वावगतेः एवञ्च - ब्रह्मविष्ण्वादिदेवानाम् शिवाधीनैश्वर्यवत्त्वात् शिवएव सर्वै रुपास्यइति ऋक्तात्पर्यम् ॥

यत्तु— हेरुद्र ! यस्मात् - चारुचित्रम् तेजनिम । तस्मात् त्वा म्मरुतो मर्जयन्ति । तवश्रिये - त्वत्सम्बन्धिसम्पत्प्राप्त्यैच - चारुचित्रम् जनिम रुद्रस्य कथमित्याकांक्षायाम् । आह । विष्णोः पदम् - चरणाम्बुजम् - उपमम् बुद्धिसमीपे निधायि - रुद्रेण निहितम् । तेनहृदये विष्णुपदध्यानेन गोनाम् विष्णुनाम्नाम् गुह्यम्नाम - रामनाम पासीत्यर्थवर्णनम् तन्नपेशलम् । त्वा मित्यध्याहारेण , रुद्रेणेति पदाध्याहारेणच गौरवात् । एवमर्थ वर्णने चारुचित्रजनिमप्रदायकविष्णोरेव मरुत्पूज्यत्वापत्त्या त्वामिति कर्माध्याहारस्याऽयुक्तत्वाच्च। गोशब्दस्य विष्णुनामपरत्वे लक्षणापत्तेश्च । उदाहृतोपबृम्हणविरोधाच्च । यदपि व्याख्यान्तरम् । रुद्र। यस्मात्तेजनिम । चारुचित्रम् । तस्मात्तव श्रियै । मरुतः । मर्जयन्तः क्षालितवन्तः किम्मार्जयन्तीत्याकाङ्क्षाया माह । पदम् यदिति । उपमम् = मेयतुल्यम् । यद्वा - माशब्दोभूमिपरः मा विश्वा पृथिवी त्यभिधानात् — उपमम् — भूमिसमीपे । विक्रमावतारे भगवत्पदस्य भूमौ निक्षिप्तत्वात् । यद्विष्णोः पदम् निधायि त्रेधा निदधेपद मितिश्रुतेः। तेन पुण्येन जन्मना । गोनाम् - गिराम्, प्रकृतस्य विष्णोःनाम्ना म्मध्ये - गुह्यम् नाम - तारास्यमुपासीति, तदप्यसम्बद्धम्, रुद्रस्य श्रीप्राप्त्यैमरुताम् विष्णुपदमार्जनम्नहेतुः । अन्यदीयपूजाया अन्यदीयश्रीप्राप्तिहेतुत्वासम्भवात् । स्वस्य रुद्रसम्बन्धिश्रीप्राप्त्यै मरुतः मार्जयन्तीति तात्पर्यवर्णनेतु । मरुताम् रुद्रसम्बन्धिश्रीप्राप्त्यसम्भवात् । श्रीशब्दस्य श्रीसदृशश्रियि लक्षणापत्तेः । तेन पुण्येनेति वाक्यासङ्गतिः । पुण्यपदस्यैवाऽभावात् । तच्छब्दस्य प्रकृतपरामर्शित्वेन तादृशार्थ-

कल्पनेतु रुद्रकर्तृकपूजानुक्त्या तच्छन्दस्य तदर्थकत्वासम्भवएव । उदाहृतोपक्रमहणश्रुत्यो र्विरोधाच्च । अवैदिकानाम्विवरणानिभवन्त्युपेक्ष्याणि ॥

अपिच - श्रु ॥ तमुष्टुहि यस्स्विषु स्सुधन्वा योविश्वस्य क्षयाति भेषजस्य । यक्ष्वामहे सौमनसाय रुद्रम् नमोभि र्देवमसुरम् दुवस्व । इतिमन्त्रेणापि वाङ्मनसकायनिबन्धनायाः पूजाया महेश्वरैकशेषत्वाम्नानादपि पूज्यो महेश्वरएवेति श्रूयते। तथाहि - अस्याऽर्थः । यस्स्विषुः- विष्णुसोमाग्निमयसायकः । तथाच, कर्णपर्वणि । चिन्तयित्वाहरिम्विष्णु मव्ययम् यज्ञवाहनम्शरम् प्रकल्पयांचक्रे विश्वकर्मा महामनाइति । सुधन्वा मेरुधन्वा । तथाच । लिङ्गपुराणे - शैलेन्द्रःकार्मुकंचापिज्याभुजङ्गाधिपस्स्वयम् । इति - अथवा, सम्वत्सरधन्वा - कर्णपर्वणि । विचित्र मृतुभिष्षड्भिः कृत्वा सम्वत्सरम्धनुरिति । अथवा ओङ्कारधन्वा । सकृत्वा धनुरोङ्कारम् सावित्रीम् ज्या म्महेश्वरइतिवचनात् । विश्वस्य भेषजस्य - संसारव्याधिनाशकस्य – ज्ञानाख्यस्य – सर्वस्य औषधस्य – क्षयति – ईष्टे । तंतमेव । हे अन्तरात्मन् – स्तुहि, अनेनवाङ्निबन्धनापूजोक्ता । सौमनसाय – सौमनस्याय – महे – उत्सवे तमेव रुद्रम् यक्ष्व, तमेवोद्दिश्य द्रव्यत्यागम् कुर्वित्यर्थः । अनेन मनोनिबन्धना पूजोक्ता । यागोनामद्रव्यत्यागः । तत्र मनएवहि कारणम् । असुरम् प्राणदातारम् तमेवदेवम्. नमोभिः प्रणामैः दुवस्व - परिचर । अनेन कायनिबन्धना पूजोक्ता ।

यद्यप्यत्र मन्त्रस्य प्रयोगसमवेतार्थस्मारकत्वेन विधायकत्वम् नास्ति। तथा प्यस्मादेव मन्त्रवर्णात्वाङ्मनसकायै रीश्वरम् पूजयेदितिविधिः। उपरिधारणविधिवत्कल्पयितव्यः। तथाच। प्रेताग्निहोत्रेश्रूयते। अथस्तात्समिधम्धारय न्ननुद्रवेत्। उपरिहि देवेभ्यो धारयतीति। तत्रपैतृकस्य हविषोऽधस्ता त्समन्त्रकम् समिद्धारणम् विधाय अथ - तद्वाक्यशेषे समिधो हविरुपरि धारणम् दैवेकर्मणि यच्छ्रुतम् स किमर्थवादः, उतविधिरिति सम्शयः। तत्र। अथोधारणविधिस्ता वकत्वेन तदेकवाक्यतालाभादर्थवादइति पूर्वपक्षः। प्रसिद्धमर्थं मनूद्य तेन स्तुति र्युक्ता। उपरिधारणन्तु नक्वापि प्रसिद्धम्। अत स्तावकत्वायोगा द्वाक्यभेद मभ्युपगम्याऽपूर्वविधिः कल्पितः। एव मत्रा प्यपूर्वार्थत्वेन विधिरेव कल्पयितव्यः अन्यच्च। श्रु॥ त्वम्देवेषु ब्राह्मणो स्यह म्मनुष्येषु ब्राह्मणोवै ब्राह्मणमुपधावति। उपत्वाधावामीति प्रपदमन्त्रे विरूपाक्षोसी त्यौपसम्हारिकविरूपाक्षपदश्रुत्या शिवस्यैव ब्राह्मणप्रपदनीयत्वावधारणेन - अन्यथा। योवै स्वाम्देवता मतियजते प्रस्वायै देवतायै च्यवते। नपरा म्प्राप्नोति पापीया न्भवतीति श्रुत्या उभयभ्रष्टत्वावगमेनच, वैष्णवपथप्रतिषेधेप्रदर्शयिष्यमाणैः प्रमाणनिकरैश्च निखिलजगज्जन्मादिकारणभूत श्शिवएकएव सर्ववेदवेद्यतया ज्ञेयोध्येयः पूजनीयश्चेति विज्ञायते॥

एव मर्चनादिरूपम् पारमेश्वर मुपासनम् पाशुपतव्रतानुष्ठानपूर्वकमेवाचरणीयमिति वेदान्तसूक्तिभि रवगम्यते। तथाहि॥

# शाम्भव दीक्षाविधिः

मू ॥ धृत्वा पाशुपतव्रतोक्तविधिना लिङ्गस्वरूपम् शिवम्
येऽश्रान्तम् समुपासते श्रुतिगणै श्श्रुत्वाच मत्वा मुहुः।
छित्वा पाशगणम् दुरन्तभवशोकांभोनिधेः कारणम्
मुक्तिं तेश्नुवते शिवस्य परमां सायुज्यरूपां बुधाः॥

धृत्वेति ॥ अत्राऽयमाशयः । श्रु ॥ व्रतमेतत्पाशुपतम् ।

तत्समाचरे न्मुमुक्षु र्नपुनर्भवायेति । व्रत मेत च्छाम्भवन्तत्समाचरेदितिच मुमुक्षोश्शाम्भवम् व्रतम् विहितम् ।

किञ्च । भगवती श्रुतिः । तेषा मेवैताम् ब्रह्मविद्याम् वदेत शिरोव्रतम् विधिव द्यैस्तु चीर्णमिति समाचरितपाशुपतव्रतानामेव ब्रह्मविद्याया मधिकार मनुशास्ति । अतएव – सूतसंहितायावचनम् । व्रत म्पाशुपत ञ्चीर्णम् यैर्द्विजै रादरेणतु । तेषामेवोपदेष्टव्य मितिवेदानुशासनमिति प्रकृतश्रुत्यर्थ मुपबृम्हयति । अत्र एकर्षिहोमशिरोव्रतादिक मध्ययनधर्मत्वा दाथर्वणिकानामेव । अन्येषान्तु शिरोव्रतापरपर्यायम् पाशुपत म्पूर्वोक्तम् सर्वश्रोतृसाधारणमिति माधवाचार्याव्याचख्युः । अतएव, अङ्गावबद्धास्त्वित्यधिकरणे श्रीकण्ठभगवत्पादैः सर्वैरपिब्रह्मोपासकैः कार्या इति पाशुपतव्रतधर्माणाम् भस्मोद्धूळनादीनाम् सर्वविद्यासमनियतत्वम् समर्थितम् ॥

अत्र—व्रत मेत त्पाशुपतम्तत्समाचरे न्मुमुक्षु र्नपुनर्भवायेति उद्भिदा यजेतपशुकामइत्यादिव दुत्पत्यधिकारविधिः ।

नचास्याऽपूर्वविधित्वाभावेन नविधायकत्वमिति वाच्यम्। अस्या ऽपूर्वविधित्वात्--

ननु---श्रु॥ व्रतमेत च्छाम्भवम् तत्समाचरेदिति वचनान्तरेणाऽस्य प्राप्तत्वेनाऽप्राप्तत्वाभावा न्नापूर्वविधित्व मितिचे न्न, एकस्यैव सन्ध्यातर्पणादिधर्मस्याऽनेकासु स्मृतिषु एकस्यैवाऽग्निहोत्रादिधर्मस्याऽनेकासु शाखासुविवे दृश्यमानत्वेपि नकस्यापि स्मृत्यन्तरशाखान्तरबोधितार्थबोधकत्वेन विधित्वम् व्याहन्यते सर्वेषामेव वाक्यानामपृथक्पृथक्तत्तच्छाखाध्येतार म्प्र त्यज्ञातज्ञापकत्वेन विधित्वोपगमात्। तथात्राऽपि विधित्वाऽव्याघातात्।

नचाऽत्रऽर्थभावनाया अंशत्रयवैशिष्ट्याभावेन विधित्वम्नसिध्यतोतिवाच्यम्। अम्शत्रितयस्य विद्यमानत्वात्। तथाहि॥

समाचरेदित्यत्रचरते रुपरितने तिप्प्रत्यये धर्मद्वयमस्ति - आख्यातत्वम्लेट्त्वञ्चेति। तत्र आख्यातत्वम्सर्वलकारसाधारणम्तदवच्छेदेन लिङ्गतार्थः पुरुषप्रवृत्तिरूपार्थभावनाम् प्रतिपादयति। साचार्थी भावना किम् - केन - कथमित्यम्शत्रयविशिष्टा - तथाच, समाचरेदित्यत्र प्रथमम् प्रत्ययेन भावयेदिति प्रतीयते। सुबन्ताभिहितानाम् सर्वेषाम् कारकाणाम् तिङन्तार्थक्रियान्वयनियमेसति तिङन्तार्थस्य प्राधान्यात् प्रथमम् प्रत्ययार्थभावनाया उपस्थिति र्युक्ता। ततः करोतिसमानार्थकम् भावयेदिति लभ्यते भाव्यते स्सकर्मकत्वात् किम्भावयेदिति कर्माकांक्षायाम् नपुनर्भवायेति जन्मराहित्यरूपो मोक्षो भाव्यत्वेनाऽन्वेति। ततश्च पाशुपतव्रतानुष्ठानेन मोक्षम्भावयेदितिबोधोभवति। ततः केनेति करणाकांक्षायाम् भिन्नपदोपा

त्तम्व्रंतम् करणत्वेनाऽन्वेति । एवञ्च, पाशुपतव्रतेन मोक्षम् कुर्यादिति ।
ततः कथमि त्याकांक्षायाम् । अध्वना मध्वपतेः पारमसीय । तिर्य
क्तिस्रोरेखाः प्रकुर्वीत । रुद्राक्षान् श्वेतानेव बिभृयात् । त न्नमइ त्युपा
सीत । सर्वलिंगग् स्थापयतीत्यादिवचनैः षडध्वन्यासभस्मरुद्राक्षशिवलिङ्ग
धारणादिक मितिकर्तव्यतयान्वेति । न न्वत्र मोक्षस्य भाव्यत्व मुक्तम् ।
तद्युक्तम् । तस्य सिद्धरूपत्वात् । साध्यत्वेहि । यत्कृतकम् त दनित्य
मिति व्याप्त्या तस्याऽनित्यत्वमापद्येतेतिचेत् - उच्यते - सिद्धस्यापि
तस्याऽनभिव्यक्तस्याऽभिव्यक्तीकरणसाधनापेक्षितया साध्यत्वम्व्यपदि
श्यते । यथा सिद्धस्यापि स्वर्गस्य तत्तदात्मानुभाव्यतापादकसाधनापेक्षि
तया साध्यत्वव्यपदेशः । अथवा । साध्यत्वेपि नमोक्षस्याऽनित्यत्वम् ।
कृतकस्यापिघटादिध्वम्सस्यनित्यत्वदर्शनेनयत्कृतकमितिव्याप्तेर्व्यभिचरित
त्वात् ।

यदिहा प्यनेवम् विन्मह त्पुण्य ङ्करोति तद्धास्याम् ततः क्षीयत
एव । आत्मानमेव लोक मुपासीत, सय आत्मानमेव लोकमुपास्ते नास्य
कर्म क्षीयते । इ त्यनेन ब्रह्मवित्कृतकर्मणोऽक्षयत्वास्नानेन यत्कृतकमिति
लौकिकन्यायस्य श्रुतिबाधितत्वाच्च ।

नच ॥ श्रु ॥ ना स्त्यकृतः कृतेनेति मोक्षस्य कर्मसाध्यत्वम्निषिद्धमि
तिवाच्यम् । तत्रकृतेनेतिकर्ममात्रसाध्यस्य स्वर्गादेरेवाऽनित्यत्वबोधनेन
विद्यासहकृतकर्मसाधितस्य नित्यत्वाव्याघातात् । अन्यथा - विद्याञ्चा
विद्यांचेतिकर्मसाहचर्यस्यश्रुत्यैवबोधितत्वेन तद्विरुध्येत ।

नच, विद्याञ्चाविद्याञ्चे त्यत्र विद्याशब्देन उपासनायाएवनिगंदित त्वेन नज्ञानस्य कर्मसाहचर्यम् विवक्षितमिति वाच्यम्, वेदान्तेषु निगदि तस्य ज्ञानस्यैवोपासनारूपत्वेन अनुभवरूपज्ञानस्य वेदान्ततात्पर्याविषय त्वात्।

अतएव, सर्वोपेक्षाच यज्ञादिश्रुते रश्ववदिति। यथा। रथचर्यायाम्नि युक्तो दक्षिणो वाहनाश्व स्सहकारित्वेनसव्य मपेक्षते। इति कर्मसापे क्षाया विद्याया मोक्षहेतुत्वम् सूत्रितम्। किंच, सू ॥ अग्निहोत्रादितु तत्कार्यायैव तद्दर्शनादिति। अग्निहोत्रादि यन्नित्यम् कर्म वैदिकम्, त तत्कार्यायैव। तस्यज्ञानस्य यत्कार्यम् तदेवाऽस्यापि कार्यमिति कर्मण स्साक्षान्मोक्षहेतुत्वमपि सूत्रितम् सङ्गच्छते। तदेवम् यत्कृतकमिति व्याप्ते श्श्रुतिसूत्रबाधितत्वेन साध्यस्यापि मोक्षस्याऽक्षय्यत्वमुपपन्नमेव॥

नच, पाशुपतव्रतस्य मोक्षफलकत्वे काम्यत्व मापद्येतेतिशंक्यम्। वैषयिकभोगप्रदस्यैव कर्मणः काम्यत्वनिश्चयेन मोक्षफलकस्यतत्वानभ्युपग मात्।

अन्यथा - नित्याना म प्यकामकर्मणा म्मोक्षफलकत्वस्य सर्व सम्मतत्वेन मोक्षफलककर्मणाम् काम्यत्वसम्भावनायाम् हन्तनित्यान्येव हातव्यानि भवेयुः। तस्मा न्मोक्षकामाधिकृतानाम् कर्मणाम् नकाम्यत्व प्रसक्तिः।

ननु, कालाग्निरुद्रोपनिषदि। अग्निरित्यादिभि र्विमृज्याऽङ्गानि सम् स्पृशेत्। व्रतमेत त्पाशुपतमिति वचनेन पाशुपतव्रतम् भस्मधारणात्मक मेवेति प्रमितम्। नभस्मरुद्राक्षशिवलिङ्गधारणात्मक मितिचेत् - उच्यते।

निषदन्तरेषु श्वेताश्वतरादिकल्पेषु। दिव्यागमेषुच, पाशुपतव्रतम्भस्मरुद्रा क्षशिवलिङ्गधारणात्मकम्भस्मरुद्राक्षधारणात्मकम् । भस्मधारणाकञ्चेति त्रिविधम् । तत्र, प्रथमम्मुख्यम्, द्वितीयम्मध्यमम्, तृतीयमवममिति

त्रिविधस्यापि प्रमिततया कालाग्निरुद्रोपनिषद्वचसा भस्मधारणात्मकमे वेति नावधार्यते । अतएव, निषत्सु । भस्मरुद्राक्षशिवलिङ्गधारणविधिव चनानि । चरितार्थानिभवन्ति ।

अन्यथा श्रु ॥ नमोब्रह्मणेधारणम्मे अस्तु । अनिराकरणम् धार यिताभूयासम् । अमृतस्य देवधारणो भूयासमि त्यादिलिङ्गधारणव्रतानुष्ठान प्रकाशकमन्त्रा विफलाभवेयुः ॥

नच, शिवलिङ्गधारणविधि र्नश्रूयतइति वाच्यम् ॥ श्रु ॥ सर्वलिङ्गग् स्थापयतीति वचनस्य तद्विधायकत्वात् : तथाहि, श्रु ॥ सर्वलिङ्गग् स्था पयति । सर्वरूपस्य शिवस्य यदधिकरणम् लिङ्गम् । सर्वरूपम् भवम् ज्ञात्वा लिङ्गेऽर्चयति यःप्रभुमिति सर्वरूपस्य शिवस्य लिङ्गाधिकरणत्व स्मरणात् । यद्वा · सर्वस्य शिवस्य यदभिव्यक्तिस्थानम्लिङ्गम् ॥ श्रु ॥ सर्वोह्येष रुद्रइति श्रूतेः, अथवा-सर्वस्य चराचरात्मकस्य प्रपञ्चस्य यल्लि ङ्गम् प्रभवाप्ययस्थानम्, लीयतेगम्यते यस्मि न्यत स्सर्वम् चराचरमिति स्मृतेः ॥

यद्वा, सर्वेषाम्भावादिभेदभिन्नानाम् दशविधानाम् निधनपतयेनम इत्यादिना प्रतितादितानाम् यल्लिङ्ग मभिद्योतकम् । तत्-स्थापयतीति-उपस्थितत्वात् कर्तु रात्मनी त्यर्थः । एतेन वपुषिधारणम्लिङ्गस्य विहि तत् ॥

नच, मन्त्रलिङ्गपर्यालोचनेन नमोन्ताना मीश्वरप्रणामाङ्गत्वप्राप्त्या। लिङ्गस्थापने विनियोगो नलभ्यतइति वाच्यम् - ऐन्द्र्या गार्हपत्य मुपतिष्ठतइति प्रत्यक्षश्रुतिविहितगार्हपत्योपस्थानाङ्गत्वेन लिङ्गप्राप्ते न्द्रापस्थानाङ्गत्वबाधवत्, एत त्सोमस्य सूर्यस्येति वाक्यशेषे पूर्वमन्त्रसमुदायपरामर्शकेन एतत्पदेन लुप्ततृतीयान्तेन सूर्यमण्डलान्तर्वर्तिन स्सोमस्य उमासहितस्य सर्वस्य सर्वविधस्य सौवर्णमणिमयादे र्लिङ्गस्य स्थापने विनियोगलाभात् लिङ्गप्राप्तप्रणामाङ्गत्वबाधस्य प्रतीयमानत्वात्।

ननु— सर्वलिङ्गग्ं स्थपयतीतिवचनम् भूम्यामेव लिङ्गस्थापन परमितिचे न्न—विनिगमनाविरहेणास्य शरीराधिकरण लिङ्गस्थापन परत्व लाभात्॥

नचोभयविधस्थापनपरत्वेनास्य वाक्यस्य शरीराधिकरणलिङ्गस्थापन परत्वम् न सिध्यतीतिवाच्यम्। अस्य शरीराधिकरणलिङ्गस्थापनमात्र विधायकत्वात्, तथाहि - सर्वलिङ्गग्ं स्थापयती त्यत्रकर्तुश्शरीरिण श्शरीरस्या प्युपस्थित्या, भूम्याम् शरीरेवे त्यधिकरणविशेषाकांक्षायाम् सन्निहितत्वेन शरीरस्यैवाधिकरणाकांक्षानिवर्तकत्वम् सिध्यति। तस्मादस्य शरीराधिकरणकलिङ्गस्थापनपरत्व मविचलम्॥

ननु— एतदर्थस्य न्यायसिद्धत्यापि प्रमाणवचनसिद्धत्वाभावेन नसिद्धिरितिचेन्न—वाक्यशेषेणाऽस्यैवार्थस्य सिद्धत्वात्। तथाहि, अक्ता श्शर्करा उपदधाती त्यत्र घृतेन तैलेनवेत्य ञ्जनकरणद्रव्यसन्देहे तेजोवै घृतमिति वाक्यशेषे घृतस्तुतिदर्शनेन सन्दिग्धेतु वाक्यशेषादिति न्यायेन घृतेनाऽक्ताइति निर्णय स्सिध्यति-तथा त्रापि स्थापनाधिकरणसाधारण्येन

स्थापनविधौ भूमा वन्यत्वे त्वधिकरणविशेषसम्शये पाणिमन्त्रम् पवित्र मिति वाक्यशेषात् लिङ्गस्थापनम् शरीरएवेति सिध्यति, पाणिमन्त्र पदस्य पाण्यधिकरणपूजाविषयार्थकत्वेनाऽशरीरधृतस्य तथाविधत्वायोगात्।

नच, पाणिमन्त्रमित्यत्र पाणिना मनना त्त्रायतइति तृतीयासमासा श्रयणेन पाणिकरणकपूजाविषयत्वप्रतीत्या स्थावरपरत्वेप्यविरोधात् तेन शरी राधिकरणलिङ्गस्थापनपरत्वम् नसिध्यतीति वाच्यम्। तथात्वे मनन शब्दार्थस्य पाण्यर्थसापेक्षतया असामर्थ्यात् समासानुपपत्तेः।

नच, सापेक्षत्वेपि देवदत्तस्य गुरुकुलम् चैत्रस्यदासभार्येत्यादौ गुर्वादि पदार्थस्य देवदत्तामशेसापेक्षत्वेपि यथा, विग्रहबोध्यार्थबोधनक्षमत्वात् समा सस्वीक्रियते, तदुक्तं- हरिणा, सम्बन्धिशब्द स्सापेक्षो नित्यम्सर्व स्सम स्यते। वाक्यव त्सात्यपेक्षाहि वृत्तावपि नहीयतइति। यद्वा -नित्यसापेक्षस्थले पूर्वपदार्थघटितसम्बन्धेन समुदायार्थेन सहैव देवदत्तादिपदार्थस्याऽन्वयः प्रथमम्विवक्षितः। अवयवार्थान्वयबोधस्तु फलत स्सिध्यति। अयम् प्रकारोपि, समुदायेन सम्बन्धो येषाम्गुरुकुलादिनाम्। समस्पृश्याऽवय वाम् स्तेतु युज्यन्ते तद्वतासहेति। एवमिहापि मननस्य क्रियारूपतया कारकामशे नित्यसापेक्षत्वा न्निरातङ्क स्समासइति वाच्यम्, तृतीयासमासा श्रयणेपाणिपदस्यैव वैयर्थ्यात्।

ननु, तृतीयासमासेपि करणलाभेन पाणिपदम् सार्थकमितिचेन्न देवा न्यजेतेत्यादाविव पूजामात्रविधानेपि हस्तादेः करणत्वस्यौचित्येन प्राप्त्या पाणिपदसार्थक्यस्य दुर्निरूपत्वात्।

नच, मनना त्त्रायतइत्युक्ते मानसादीनामपि करणत्वप्रसक्त्या तद्व्यवच्छेदार्थम् पाणिपदमिति वाच्यम्। शिवपूजादिकम् कार्यम्मनोवाक्कायकर्मभिरि त्यभियुक्तोक्त्या तेषामपि करणत्व स्येष्टत्वेन - कर्ममात्रे मनस्समवधानस्यावश्यकतया पाणिनैवेति नियमेन तद्व्यवच्छेदेऽपसिद्धान्तापत्तेः॥

किञ्च, तृतीयासमासाश्रयणे एकदेशान्वयापत्तिः। नच, सप्तमीतत्पुरुषाश्रयणे प्येषदोष स्तदवस्थइति वाच्यम्, पाणिपदस्य विशिष्टेनैवाऽन्वयस्वीकारात्।

ननु, तृतीयातत्पुरुषे प्येतत्समाधान मुन्नेयमितिचे न्न। उपासकपाणिनिष्ठकरणतानिरूपकत्वस्य परमेश्वरकर्तृकत्राणक्रियायाम् वाधेन तृतीयातत्पुरुषे विशिष्टान्वयस्य बाधितत्वात्। उपासकपाण्यधिकरणकत्वन्तु - उपासकपाणौ पूज्यमानेश्वरकर्तृकत्राणक्रियायामपिसम्भवत्येवेति सप्तमीतत्पुरुषे विशिष्टान्वयस्य निर्वाधात्।

नच, पाणिमन्त्रमित्यत्र पाणिना अभिमन्त्रितमि त्यर्थपरिग्रहे पाणिपदम् सार्थकमिति वाच्यम् - अभिमन्त्रणस्य वाक्करणकत्वेन वह्निना सिञ्चती त्यादाविव योग्यताविरहात्। पुराणप्रसिद्धपूजावाचकस्याऽभिमन्त्रितार्थकत्वे गौणार्थस्वीकारापत्तेश्च॥

ननु, सर्वलिङ्गवाक्यस्य लिङ्गधारणप्रतिपादकत्वम् प्रकरणविरुद्धमितिचे न्न - लिङ्गधारणरूपार्थस्यैव प्रकरणानुबद्धत्वात्। तथाहि, निधनपतयेनम इत्यारम्य। एतत्सोमस्य सूर्यस्येत्यन्तम्सर्वोऽयम्, अनुपदमेव पठ्यमानेन सर्वलिङ्गम् स्थापयतीति वाक्येन विहितस्य लिङ्गधारणस्याऽर्थवादः।

धार्यमाणलिङ्गस्य पूर्वोक्तै र्नमोन्तै र्मन्त्रै रुत्कर्षवत्वेन बोधनरूप स्तुतिविषयीकृतै स्सर्वैरपि लिङ्गै रभेदावसायात्, पूर्वोक्तमन्त्राण।म् धार णविध्यर्थवादत्वम् सिध्यति । एवम् विध्यर्थवादत्वसम्पत्त्या वर्थवादभागस्य तद्विषयंकोपबृम्हणपर्यालोचनेन धार्यमाणलिङ्गविषयकत्वे निर्णीते विधिभा गस्य तथात्वानभ्युपगमे विध्यर्थवादयो र्वैयधिकरण्य मापद्येत । तच्चानि ष्टम् विहितमेव स्तूयतइति सिद्धान्तात् ॥

ननु—निधनपतय इत्यादिपुरोवादानुरोधेन सर्वलिङ्गवाक्यस्य लिङ्ग धारण विधायकत्वम् नोपपद्यते , तथाहि , निधनपतय इत्यदि वाक्य स्यापि पुरोभागे । श्रु ॥ दह्रम्विपाप मित्यादिना दह्रविद्याआम्नाता । तदनुरोधेन निधनपतय इत्यादि वाक्यस्य । सर्वलिङ्गवाक्यस्यच तादृश दह्रविद्यार्थवादत्व तदनुवादत्वाभ्युपगमस्यैव न्याय्यत्वादितिचे दुच्यते। दह्रम्विपापमित्यादि पुरोवादानुरोधेनापि सर्वलिङ्गवाक्यस्य लिङ्गधारण विधायकत्वम् नासमंजसम् । तथाच ॥ दहर विद्यायाः पारमेश्वरत्वेन प्राणलिङ्गोपासनारूपत्वेनच । इष्टप्राणलिङ्गोपासनयो र्मुक्तिरूपैकफलसाध कत्वेन पञ्चप्रयाजवदेकाङ्गिप्रयुक्तानेकाङ्गरूपत्वेन - एककर्तृकत्वेनच , प्राणलिङ्गोपासनाविध्यनन्तर मिष्टलिङ्गोपासनस्याऽवश्य विधेयतया सर्व लिङ्गवाक्येन इष्टलिङ्गधारणविधाने सन्दर्भविरोधस्य दुर्निरूपत्वात् ॥

नच , दहरविद्यायाः पारमेश्वरत्वसिद्धौतस्याः प्राणलिङ्गोपासना परत्वम् विभाव्य तदनुरोधेन सर्वलिङ्गवाक्यस्य इष्टलिङ्गोपास नाविधाय कत्वम् कल्पयितुम् युज्येत—नतस्याः पारमेश्वरत्व मेवनिश्चितम् । कैश्चि

द्वैष्णवत्वस्यापि प्रतिपाद्यमानत्वात्। इतिवाच्यम्। दह्वविद्यायाः पारमेश्वरत्वस्य वैष्णवपथप्रतिषेधेप्रतिपादयिष्यमाणत्वात्॥

ननु, तस्याः पारमेश्वरत्वेपि प्राणलिङ्गोपासनारूपत्वम् कथमितिचेत्। उच्यते। प्राणे ष्वन्तर्मनसो लिङ्ग माहु र्यस्मिन्क्रोधो याचतृष्णाक्षमाच। तृष्णांछित्वा हेतुजालस्यमूल म्बुध्या संचिन्त्य स्थापयित्वाऽथरुद्रइति। ध्यानबिन्दूपनिषदि। हृत्पद्मकर्णिकामध्ये स्थिरदीपनिभाकृतिम्। अंगुष्ठ मात्र मचल न्ध्याये दोङ्कारमीश्वरमिति। हम्सोपनिषदि। एषोऽसौपर मोहम्सो भानुकोटि प्रतीकाशो येनेदम् व्याप्तम्। तस्याष्टधा वृत्ति र्भवति पूर्वदळे पुण्येमतिः। आग्नेये निद्रालस्यादयो भवन्ति याम्ये क्रौर्ये मतिः। निरृऋते पापेमनीषा। वारुण्यां क्रीडा। इत्यारभ्य। लिङ्गेसुषुप्तिरिति हृदयान्तर्वर्तिन शिवस्य लिङ्गरूपत्वम् स्पष्टमुक्तम्। अतएव निषदन्तरेष्वपि। आधारे कनकप्रख्यम् हृदये विद्रुमप्रभम्। भ्रूमध्ये स्फटिकच्छायम् लिङ्गम् योगीविभावयेदित्यादिना हार्द म्ब्रह्मलिङ्ग रूप मावेदितम्। अन्यथा - पद्ममध्ये मध्यकेसरकर्णिकातिरेकेण चतुर्थस्य कस्यचि दभावाल्लिङ्गे सुषुप्तिरिति निर्विषयम् स्यात्। तस्मा द्दहराका शस्य लिङ्गरूपत्व न्दुरपलपम्॥

नचैवमपि - सर्वलिङ्गवाक्यस्य पुरोभागे प्रतिपाद्यमानाया दह्व विद्याया अन्तर्लिङ्गोपासनापरत्वेन तदनुरोधेन तदनन्तरस्य सर्वलिङ्गवाक्य स्यापि तत्परत्व मेवोचितमितिवाच्यम्, तथासति। पौनरुक्त्यापत्त्यानैरर्थ क्यप्रसङ्गात्॥

ननु, अन्तर्लिङ्गधारणेनैव मोक्षसिद्धौ बाह्यलिङ्गधारण न्निरर्थमिति चेन्न। तर्हि, ब्रह्मसूत्रधारणस्यापि निरर्थकत्वापत्तेः। तथाच। ब्रह्मोपनिषदि - हृदिस्था देवता स्सर्वे हृदिप्राणाः प्रतिष्ठिताः। हृदि प्राणाश्च ज्योतिश्च त्रिवृत्सूत्रञ्च तद्विदुः। हृदिचैतन्ये तिष्ठति॥ यदक्षर म्पा म्ब्रह्म तत्सूत्रमिति धारयेत्। सूचनात्सूत्रमि त्याहु स्सूत्रन्नाम परम्पदम्। तत्सूत्रम् विदितम् येन सविप्रो वेदपारगइति - हृदिभाव्यमानस्य ब्रह्मण स्स्फोरणार्थ न्त्रिवृत्कृतसूत्रस्येवाऽन्तर्लिङ्गस्यापि भावनास्थिरीकरणार्थ म्बाह्यलिङ्गधारणस्याऽऽवश्यकत्वात्॥

ननु, लिङ्गधारणचन्द्रिकाविवृतौ शरदि। उपासनाया मानसक्रिया रूपतया एकस्मिन्नेव प्रतीकेऽनेकोपासनाया श्शास्त्रेषु दृष्टतया दह्वोपासनाया अ प्यनियतविषयकत्वे नकापि क्षतिरिति॥ तत्रैव। ननु, सालग्रामे जलादौच एकस्मिन्नेव स्थानेअनेकदेवतानाम्पूजादिदर्शनेनप्रतीकैक्ये प्युपासनाभेदेनाऽनियतविषयकत्व न्नदोषइतिच दह्वोपासनस्य प्रतीकोपासनत्व मुत्प्रेक्षितम्। अन्तर्लिङ्गोपासनस्यैव प्रतीकोपासनत्वे बाह्यलिङ्गोपासनस्य तत्वं कैमुतिकन्यायसिद्धम्॥ एवञ्च - तद्रीत्या, अप्रतीकालम्बनान्नयतीति बादरायणइति सूत्रानुसारेण प्रतीकोपासकाना म्ब्रह्मप्राप्त्यभाव आशंक्यते॥ तथाहि, शाङ्करभाष्ये। अप्रतीकालम्बनाधिकरणे। नप्रतीकेषुब्रह्मक्रतुत्व मस्तिप्रतीकप्रधानत्वा दुपासनस्येति॥ ब्रह्मदृष्ट्यधिकरणेपि। ब्रह्मेत्युपासीत। ब्रह्मेत्युपास्तेइतिच। इतिपर म्ब्रह्मशब्द मुच्चारयति। शुद्धामृस्त्वादित्यादिशब्दान्। ततश्च। यथा शुक्तिकाम् रजतमिति प्रत्येतीत्यत्र शुक्तिवचनएव शुक्तिकाशब्दः। रजतशब्दस्तु रजत

प्रतीतिलक्षणार्थः प्रत्येत्येवहि केवलम् रजतमिति। नतु तत्र रजत मस्ति। एव मत्रादित्यादी न्ब्रह्मेति प्रतीयादिति। एव म्प्रतीकानामेव प्राधान्ये नाऽनुचिन्तना न्नप्रतीकालम्बनाना म्ब्रह्मप्राप्ति रितिचेत् - उच्यते॥

यत्र मनआदिप्रतीकमेव ब्रह्मे त्युपास्यते। तद्धि प्रतीकोपासन न्तस्याऽब्रह्मोपासनरूपत्वात्। अथ यत्र प्रतीके साक्षा द्ब्रह्मैवोपास्यते। तत्तु साक्षाद्ब्रह्मोपासनमेव। तस्मा द्दहराद्युपासकानाम् साक्षा द्ब्रह्मो पासकत्वेन नप्रतीकालम्बनत्वम्॥

अतएव, श्रीशङ्कराचार्याः प्रतीकालम्बनाहिते। येचेतन मचेतनम्वा ब्रह्मदृष्ट्या केवलञ्चोपासते॥ अप्रतीकालम्बनास्तु ते। येविश्वाधिक म्ब्रह्मसाक्षा दुपासते। साक्षा दुपासका न्पुरुष स्साक्षा द्ब्रह्मैव गमयती त्याहुः॥

अथैतादृशाना म्प्रतीकोपासनत्वाभ्युपगमेपि वचना द्ब्रह्मप्राप्ति र्भव त्यनिवार्या॥ अतएव श्रीकण्ठाचार्यैः त्रिलोचन न्नीलकण्ठ म्प्रशान्त न्ध्यात्वा मुनिर्गच्छति भूतयोनिम् समस्तसाक्षि न्तमसःपरस्तादिति साक्षा द्ब्रह्मप्रा प्त्यवगमा दित्युक्तम्॥ अब्रह्मोपासकाना मेव पञ्चाग्नि विदाम् वचनेन ब्रह्मप्राप्ति रूरीकृता। साक्षाद्ब्रह्मोपासकानामृहन्तवचना दपि नोरीक्रियतइतीद म्मन्महे ब्रह्मद्वेषमूलम्॥ अतएव। भामत्याम् भवतु पंचाग्निविद्याया मब्रह्मक्रतूनामपि ब्रह्मलोकनयनम् वचनात्। किमिवहि वचन न्नकुर्या न्नास्तिवचनस्याऽतिभारइति। वस्तुतस्तु दहरो पासनायाः प्रतीकोपासनरूपत्व म्भ्रन्तिनिबन्धनमेव। तथाहि। शाङ्कर भाष्येदहराधिकरणे। तद्यथेहकर्मचितो लोकः क्षीयते। एवमेवाऽमुत्र

पुण्यचितो लोकःक्षीयतइतिच कर्मणा मन्तवत्फलत्व मुक्त्वा । अथयइह त्मान मनुविद्य व्रजन्त्येतांश्च सत्यान्कामान् स्तेषाम् सर्वेषु लोकेषु कामचारोभवतीति प्रकृतदहराकाशविज्ञानस्याऽनन्तफलत्वम् वद न्परमा त्मत्व मस्य सूचयतीति ॥

एवंच , दहरोपासनशब्दित म्प्राणलिंगोपासनम् साक्षाद्ब्रह्मोपासन मेवेतिव्यक्तम् ॥

नन्वेवमपि, बाह्यलिंगोपासनस्याऽब्रह्मक्रतुत्व मनिर्णयम्। परिच्छि न्नस्य लिंगस्याऽपरिच्छिन्नब्रह्मरूपत्वाभावा दितिचे न्नैवम् ।

श्रु ॥ अणो रणीयानि त्यपरिच्छिन्नस्या प्यण्वादिपरिमाणकलिंगरूप त्वस्याम्नातत्वेन तदुपासनस्य ब्रह्मक्रतुत्वानपायात् ॥

अन्यथा । विश्वेश्वरादिलिङ्गोपासनानामपि तत्वापत्त्या नास्ति कत्वप्रसक्तेस्तस्मा दान्तर म्बाह्यमपि लिङ्गोपासनम् साक्षा द्ब्रह्मोपासन मेवे त्यनवद्यम् ॥

ननु, बाह्यलिङ्गधारणस्यावश्यकत्वेपि शरीरस्याऽशुचित्वसम्भावनया तत धारण न्नयुज्यतइतिचे न्न। अशुचिभूतस्यापि शरीरस्य षडध्वशोधनेन शुचित्वसम्पत्त्या तत धारणस्य युक्ततरत्वात् ॥

नच, तथापि, वपुषो मलविमोकादिमूलाशुचित्वस्याऽनिवार्यतया तत धारण न्नयुज्यतइति वाच्यम् । शौचविधे स्तादृशाशुचित्वापनोदकतया आस्तिकाना न्तादृशाशुचित्वस्याऽनाशङ्क्यत्वात् ॥

किंच, सर्वावै देवता वेदविदि ब्राह्मणे वसन्तीति श्रुत्या सर्वदेवता वासयोग्येन ब्राह्मणेन नित्यशुचिनैव भाव्यत्वेन तादृक्षस्यैव बाह्यलिङ्गधारणेऽधिकृतत्वेनचाऽशुचिम्मन्यस्यात्वाऽनधिकृतत्वेनेष्टापत्तेः।

इदमिहतत्त्वम्। परममुक्तेः परमेश्वर सायुज्यरूपत्वस्य वेदान्तार्थ परिष्कारेऽस्माभिर्व्यवस्थापितत्वेन सायुज्यस्यच सहब्रह्मणेत्यादिश्रुत्यनुरोधेन सहयोगरूपतयाचतत्सायुज्यरूप परममुक्तिव्यञ्जकम् शिवलिङ्ग धारणात्मकम् पाशुपतव्रतम् मोक्षाधिकारसाधकतया श्रु। व्रतमेतच्छाम्भवन्तत्समाचरेन्मुमुक्षुरितिश्रुत्या विहितम्।

किंच, अमृतत्वप्रापकस्य मूर्धन्यनाडी निष्क्रमणस्य, हार्दानुगृहीतश्शताधिकयेति हार्दब्रह्मप्रसाद निदानत्वस्यप्रमितत्वेन हार्दस्यापिब्रह्मणोलिङ्गे सुघुप्तिः। प्राणेष्वन्तर्मनसोलिङ्गमाहुरित्यादिना प्राणलिङ्गरूपत्वस्याम्नातत्वेन तदनुसन्धानस्यापि बाह्यलिङ्गधारणपूर्वकतदुपासनैक साध्यतयाच ब्रह्मविद्याङ्गतया भस्मरुद्राक्षशिवलिङ्गधारणात्मक म्पाशुपतव्रतम् विहितमिति॥

तस्माद्भस्म रुद्राक्षशिवलिङ्गधारणात्मक पाशुपतव्रताचरणपूर्वकम् श्रवणमनन निदिध्यासनैः परशिवम्प्रपन्नाना मेव तत्साक्षात्कारद्वारा परममुक्तिरिति॥

नन्वेवम्, लिङ्गधारणप्राधान्येन बसवेश्वरमतपरिग्रहे वर्णाश्रमधर्मच्युतेः वैदिकत्व म्भज्येतेतिचेत् – उच्यते॥ पुरस्ता च्छङ्कराचार्यैरद्वैतसिद्धान्तावलम्बेन ज्ञानप्राधान्येन मतभेद मवधूय संघीभाव स्सम्पादि

तद्दति समवेक्ष्य बसवेश्वरेणा प्यद्वैतसिद्धान्तावलम्बेनैव भक्तिप्राधान्येन कुलभेद म्विभिद्य सङ्गीभावस्य सम्पादिततया भक्तिप्राधान्यस्थापनार्थम् लिङ्गधारणस्योरीकृतत्वेपि कुलभेदविभेदनार्थम् वर्णाश्रमधर्माणान्दूरीकृतत्वेन तन्मते वर्णाश्रमधर्मापरिग्रहेपि वैदिकशैवे वर्णाश्रमधर्मानुष्ठानस्यावश्यकत्वात् ॥

अतएव, वर्णाश्रमसदाचारा श्शिवेनकधिताः पुरा । येत, नु, त्य वर्तन्ते शिवस्याज्ञापलापिनः । राजाज्ञाभङ्गकृन्नृाणाम् यथादण्डो भवेद्ध्रुवम् शिवाज्ञाभङ्गकृन्नृणा न्दडोहि नरकस्तथा ॥ वर्णाश्रमाणा म्मर्यादा शिवेन स्थापितायदि । यस्तान्त्यजति मोहेन सश्रीकण्ठापराधकृदित्यादिना शङ्करसम्हितादिषु वर्णाश्रमधर्मावश्यकत्व मवधारितम् ॥

तस्मात् - वर्णाश्रमधर्मानुष्ठानपूर्वकशाम्भवदीक्षया परशिव म्प्रपन्नानामेव तत्प्रसादेन मोक्षलक्ष्मीलाभइ त्यनवद्यम् ॥

श्लो॥ नागलिङ्गकृतौ वेदपथे - ब्रह्मपथङ्गते
शिवाद्वैतविधिस्सोय मितिभूयाच्छिवायवः ॥



तेनालि "भारती मुद्राक्षरशालायां मुद्रितः — १९३५.

